तत्राऽऽद्यानां चतुर्णाम् (१९-२२) आद्याश्चतस्रो निचृद्[1]-विषमा-गायत्र्यः। अन्त्या भुरिग्विषमाः। पञ्चमस्य (२३) आद्याश्चतस्रः समविषमाः। अन्त्या स्वराड् विषमा। सर्वा एवं[2] सङ्गताः पञ्चविंशतिस्त्रिपाद इति।

'शेरभक' (२,२४) इत्यष्टर्चमायुष्यं पाङ्क्तम्। ब्रह्मा सर्वाभिः प्रत्यृचं मन्त्रोक्तदेवतामृग्भिरस्तौदिति।

प्रथमे द्वे (१,२) पुरउष्णिहौ। परे द्वे (३,४) पुरोदेवत्ये[3] (?) पाङ्क्ते। सर्वा एताश्चतस्रो विराजः[4]। पराः (५-८) पञ्चपदाः[5] पथ्यापङ्क्तयः। अत्राऽऽद्ये (५,६) भुरिजौ। उत्तरे (७,८) निचृताविति। 'जूर्णि' चतस्रः[6] (५-८) चतुष्पदा बृहत्यः। प्रथमावर्जं तिस्रोऽपि[7] भुरिज इति॥ २१॥

'शं नः' (२,२५) इति वानस्पत्यमानुष्टुभम्। चातनोऽनेन पृश्निपर्णीमोषधीमस्तौत्। 'गिरिमेनाँ आ' (४) इति भुरिक्।

'एह यन्तु' (२,२६) इति पशव्यं त्रैष्टुभम्। सविताऽनेन पशूनभ्यस्तौदिति। 'सं सं स्रवन्तु' (३) इति उपरिष्टाद्विराड् बृहती। 'सं सिञ्चामि' इति द्वे (४,५) अनुष्टुभौ। पूर्वा (४) तत्र भुरिक्।

'नेरुच्छत्रुः' (२,२७) इति सप्तर्चं वानस्पत्यमानुष्टुभम्। कपिञ्जलः प्रथमया (१) अरिनिरोजस्त्वमप्रार्थयत् मन्त्रोक्तामोषधिम्। पराभिश्चतसृभिः (२-५) चौषधिमस्तौत्। परया (६) रौद्रया रुद्रम्। परया (७) ऐन्द्र्येन्द्रमिति[8]।

'तुभ्यमेव' (२,२८) इति त्रैष्टुभं जरिमायुर्दैवतम्[9]। शम्भुः प्रथमया (१) जरिमाणमभिष्टूयाऽप्रार्थयदायुश्च।

---

१. नास्ति भा[६]. २. एव भा[१-३५६] बी. ३. °देवेत्ये पा भा[१३]; °देवतपांक्ते लं. ४. वैराजः मूको. ५. पञ्चपादाः लं. ६. नास्ति बी. ७. तिस्रः भा[३]. ८. इन्द्रमिति भा[५] बी. ९. °दैवतम् भा[१-३].

[1]द्वितीयया (२) मित्रावरुणौ। परया (३) पुनर्जरिमाणम्। पराभ्याम्† (४-५) द्यावापृथिव्यादिदेवानायुश्च[1]। प्रथमा (१) जगती। अन्त्या (५) भुरिगिति ॥ २२॥

'पार्थिवस्य' (२,२९) इति सप्तर्चं त्रैष्टुभं बहुदेवत्यम्[2]। अथर्वा। प्रथमा (१) वैश्वदेवी। तया देवानायुष्यमात्मनेऽप्रार्थयत्। द्वितीयायाः प्रथमेन ($२^1$) आयुर्जातवेदसम्। परेण पादेन ($२^2$) प्रजां त्वष्टारम्। तृतीयेन ($२^3$) सवितारं धनं शतायुश्च। परया (३) इन्द्रं सौप्रजास्त्वादि। पराभ्याम् (४-५) द्यावापृथिव्यौ विश्वान् देवान् मरुतश्चाऽपश्च। परया (६) अश्विनौ। परया (७) इन्द्रम् अस्तौदिति च शिष्यते। प्रथमा (१) अनुष्टुप्। 'इन्द्रेण दत्तः' (४) इति पराबृहती निचृत् प्रस्तारपङ्क्तिः।

'यथेदम्' (२,३०) इति प्रजापतिः। आश्विनमानुष्टुभम्। कामिनीमनोऽभिमुखीकरणकामः प्रथमया (१) भूतृणदृष्टान्तेन[3] मनोमन्थनमादध्यात्[4]। परया (२) अश्विनौ। पराभिः (३-५) तदर्थमोषधिमस्तौत्। अन्त्यया (५) दम्पती परस्परं मनोग्रहणमकुरुताम्। [5]'यथेदम्' (१) इति[5] पथ्या पङ्क्तिः। 'यत् सुपर्णा' (३) इति भुरिगिति ॥ २३॥

'इन्द्रस्य या' (२,३१) इति महीदेवत्यमुत[6] चान्द्रमसमानुष्टुभम्[7]। काण्वः प्रथमया (१) महीमस्तुवत्। पराभिः (२-५) सर्वाभिश्च कृमिजम्भनम् अदधादिति[8]।

'दृष्टमदृष्टम्' (२) इत्युपरिष्टाद्-विराड्-बृहती। परा (३) आर्षी त्रिष्टुप्। 'अन्वान्त्र्यम्' (४) इति प्रागुक्ता बृहती। 'ये क्रिमयः' (५) इति प्रागुक्ता त्रिष्टुप्।

---

१-१. नास्ति बी. † पराभिः मूको. २. °दैव° भा[२]. ३. भूतृणं दृष्टा° भा[१] लं बी. ४. °माधात् भा[१ २]. ५-५. तदिति मा[१-३ ५ ६] बी; तदिति प्रथमा लं. ६. नास्ति लं. ७. चान्द्रमा° भा[१] लं. ८. आदध्यात् भा[३ ५ ६]; आदधात् भा[१ २].

'उद्यन्नादित्यः' ( २,३२ ) इत्यादित्यदेवत्यं षड्चम्[1] आनुष्टुभम्। अनेनोक्तर्षिरुक्तक्रियामकरोदिति । प्रथमा ( १ ) त्रिपाद् भुरिग् गायत्री। 'प्र ते शृणामि शृङ्गे' ( ६ ) इति चतुष्पान्निचृदुष्णिगिति ॥ २४ ॥

'अक्षीभ्यां ते' ( २,३३ ) इति यक्ष्मविबर्हणं सप्तर्चं चान्द्रमसमायुष्यमानुष्टुभम् । ब्रह्माऽनेन सर्वेण सूक्तेन सर्वाङ्गतो यक्ष्मनिर्गमनम् अदधात्[2] ।

'ऊरुभ्यां ते' ( ५ ) इत्युपरिष्टाद्-विराड्-बृहती । 'हृदयात्ते' ( ३ ) इति ककुम्मती। 'आन्त्रेभ्यः' ( ४ ) इति चतुष्पाद् भुरिगुष्णिक्। 'अस्थिभ्यः' ( ६ ) इति उष्णिग्गर्भा निचृदनुष्टुप्। 'अङ्गे अङ्गे' ( ७ ) इति पथ्या पङ्क्तिः।

'य ईशे' ( २,३४ ) इति पाशुपत्यं पशुभागकरणं त्रैष्टुभम्। अथर्वा प्रथमया ( १ ) पशुपतिमभिष्टूय रायश्चाऽप्रार्थयदन्ततः[3] । द्वितीयया ( २ ) देवान्। परया ( ३ ) अग्निं विश्वकर्माणम् । परया ( ४ ) वायुं प्रजापतिम्। अन्त्यया ( ५ ) यज्ञियं पशुमाशिषा प्राणुदत्[4] ।

'ये भक्षयन्तः' ( २,३५ ) इति वैश्वकर्माणं त्रैष्टुभम्। अङ्गिराः सर्वेणाऽनेन सूक्तेन तं विश्वकर्माणमेवाऽस्तौत् । प्रथमा ( १ ) बृहतीगर्भा। 'घोरा ऋषयः' ( ४ ), 'यज्ञस्य चक्षुः' ( ५ ) इति भुरिजौ।

'आ नो अग्ने' ( २,३६ ) इत्यष्टर्चमग्नीषोमीयं त्रैष्टुभम्। पतिवेदनः प्रथमया ( १ ) अग्निमस्तौत्। द्वितीयया ( २ ) सोमादीन् देवान्। परया ( ३ ) अग्नीषोमौ। परया ( ४ ) तु इन्द्रम्। परया ( ५ ) सूर्यम्। परया ( ६ ) धनपतिम् । परया ( ७ ) हिरण्यादि भगं च। अन्त्यया ( ८ ) ओषधिमप्रार्थयदिति।

---

१. षडर्चम् बी लं भा[१ २ ६]. २. आदध्यात् भा[३ ५ ६] बी; आदधात भा[१ २]. ३. परायश्चा° भा[१-३ ५ ६]. ४. प्राणुदात् लं.

प्रथमा ( १ ) भुरिक् । 'सोमजुष्टम्' ( २ ) 'भगस्य नावम्' इति तिस्रः ( ५-७ ) अनुष्टुभः । अन्त्या ( ८ ) निचृत् पुर-उष्णिगिति ॥ २५ ॥

[1]इति ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां[1]

प्रथमः पटलः समाप्तः[2] ।

---

१-१. इति श्री ब्रह्म° भा[1]; इत्यथर्ववेदे अनुक्रमणिकायां संवत् १९२२ ना कार्तिक वदि १३ गु; इति ब्रह्मवेदोक्त अनुक्रमणिकायां भा[5 6]. २. नास्ति भा[1 3 5] लं.

अथ

# द्वितीयं पटलम्

## अथर्ववेदे तृतीयं काण्डम्

'अग्निर्न' इति द्वे ( ३,१-२ ) सेनामोहने वहुदेवत्ये त्रैष्टुभे। अथर्वा। अत्र षड्र्चं[1] प्रकृतिः। अन्या विकृतिरिति विजानीयात्। प्रथमया ( ३,१,१ ) अग्निमस्तौत्। द्वितीयया ( २ ) मरुतः। पराभिः ( ३-६ ) इन्द्रम्।

परस्य ( ३,२ ) प्रथमाभ्याम् ( १-२ ) अग्निम्। पराभ्याम् ( ३-४ ) इन्द्रम्। परया ( ५ ) द्याम्। परया ( ६ ) मरुत इति।

पूर्वस्य तृतीयान्त्ये ( ३,१,३;६ ), 'अयमग्निरमूमुहत्' इति तिस्रः ( ३,२,२-४ ) अनुष्टुभः। 'इन्द्र सेनाम्' ( ५ ) इति विराट् पुर-उष्णिक्। 'यूयमुग्राः' ( २ ) इति विराड्गर्भा भुरिक्।

'अचिक्रदत्' ( ३,३ ) इति नानादेवत्यमुताऽऽग्नेयं त्रैष्टुभम्। अनेन मन्त्रोक्तान् देवानस्तौत्। 'अद्भ्यस्त्वा राजा' ( ३ ) इति चतुष्पदा भुरिक् पङ्क्तिः। 'ह्वयन्तु' इति द्वे ( ५-६ ) आनुष्टुभे।

[2]'आ त्वा गन्', 'आयमगन्' इति द्वे ( ३,४-५ ) सूक्ते। †आद्यम् ( ४ ) सप्तकम्। द्वितीयम् ( ५ ) अष्टकम्†[2]। [3]प्रथमं त्रैष्टुभम्। परमानुष्टुभम्[3]। पूर्वमैन्द्रम्[4]। उत्तरं सौम्यम्। पूर्वेणेन्द्रम्। उत्तरेण पर्णमणिमुक्तर्षिरस्तौदिति। 'अश्विना त्वा,' 'आ प्र द्रव' इति द्वे ( ३,४,४-५ ) भुरिजौ। 'आ त्वा गन्' ( ३,४,१ ) इति जगती।

'मयि क्षत्रम्' इति द्वे ( ३,५,२-३ ), 'आ माऽरुक्षत्' ( ३,५,५-७ )

---

१. षडर्चं बी. २-२. नास्ति लं. †-† नास्ति भा[२]. ३-३. नास्ति भा[१] लं. ४. २ पञ्च प्रदिशः; ३ अग्निः; ४ अश्विनौ, मित्रावरुणौ, विश्वे देवाः, मरुतः; ५ द्यावापृथिव्यौ सात.

इति तिस्रः अनुष्टुभः। 'आयमगन्' ( ३,५,१ ) इति पुरोऽनुष्टुप् त्रिष्टुप्। 'पर्णोऽसि' ( ३,५,८ ) इति विराड् उरोबृहती ॥ १ ॥

'पुमान् पुंसः परिजातः' ( ३,६ ) इत्यष्टर्चं वानस्पत्याश्वत्थदेवत्यमानुष्टुभम्। जगद्बीजं पुरुषोऽनेन सूक्तेनाऽरिक्षयायाऽमुं मन्त्रोक्तदेवमश्वत्थमेवाऽस्तौदिति[1]।

'हरिणस्य' ( ३,७ ) इति सप्तर्चं यक्ष्मनाशनदैवतमुत बहुदेवत्यमानुष्टुभम्। भृग्वङ्गिरा आद्याभिस्तिसृभिः ( १-३ ) हरिणमस्तौत्। परया ( ४ ) तारके। परया ( ५ ) अपः। पराभ्याम् ( ६-७ ) यक्ष्मनाशनम्। 'यदासुतेः' ( ६ ) इति भुरिक्।

'आ यातु मित्रः' ( ३,८ ) इति मैत्रमुत वैश्वदेवं त्रैष्टुभम्। अथर्वा चतसृभिः ( १-४ ) मित्रादीन् विश्वान् देवानस्तौत्। पराभ्याम् ( ५-६ ) सांमनस्यमिति।

'धाता रातिः' (२), 'अहं गृभ्णामि' ( ६ ) इति जगत्यौ। 'सं वो मनांसि' (५) इत्यनुष्टुप्। 'इहेदसाथ' (४) इति विराड् बृहतीगर्भा चतुष्पादिति ॥ २ ॥

'कर्शफस्य' (३,९) इति द्यावापृथिवीयमुत वैश्वदेवमानुष्टुभम्। वामदेवः। 'येना श्रवस्यवः' ( ४ ) इति चतुष्पान्निचृद् बृहती। अन्त्या ( ६ ) भुरिक्।

'प्रथमा ह' (३,१०) इति त्रयोदशर्चमाष्टक्यमानुष्टुभम्। अथर्वा सर्वाभिरेकामेवाऽष्टकामस्तौत्[2]। 'इयमेव सा या' इति तिस्रः ( ४-६ ), 'एकाष्टका' ( १२ ) इति त्रिष्टुभः। 'आ मा पुष्टे च' ( ७ ) इति त्र्यवसाना षट्पदा विराड्गर्भाऽतिजगती।

'मुञ्चामि त्वा' ( ३,११ ) इत्यष्टर्चमैन्द्राग्नमायुष्यं त्रैष्टुभम्। ब्रह्मा

---

१. मन्त्रोक्तं दे° भा[१ २ ५] लं.   २. १ धेनुः; २-४ रात्रिः, धेनुः; ५ एकाष्टका; ६ जातवेदाः, पशवः; ७ रात्रिः, यज्ञाः; ८ संवत्सरः; ९ ऋतवः; १० धाता, विधाता, ऋतवः; ११ देवाः; १२ इन्द्रः, देवाः; १३ प्रजापतिः सात.

यक्ष्मनाशनदेवत्यमुत भृग्वङ्गिराश्च। उभौ मन्त्रोक्तदेवान् अनेनाऽस्तुतामिति।

'शतं जीव' (४), 'अभि त्वा' (८) इति जगत्यौ। पूर्वा (४) शक्करीगर्भा। परा (८) त्र्यवसाना षट्पदा बृहतीगर्भा। 'प्र विशतम्' इति द्वे (५-६) अनुष्टुभौ। 'जरायै त्वा' (७) इति उष्णिग्बृहतीगर्भा पथ्या पङ्क्तिरिति ॥ ३ ॥

'इहैव ध्रुवाम्' (३,१२) इति नवर्चं शालासूक्तं वास्तोष्पतिशालादैवतं[1] त्रैष्टुभम्। ब्रह्मा सर्वेणाऽनेन शालामस्तौत्।

[2]'धरुण्यसि शाले' (३) इति[2] बृहती। 'ऋतेन' (६) इति शक्करीगर्भा जगती। 'एमाम्' (७) आर्ष्यनुष्टुप्। द्वितीया (२) विराड् जगती। 'पूर्णं नारि' (८) इति भुरिक्। 'इमा आपः' (९) इत्यनुष्टुप्।

'यददः' (३,१३) इति सप्तर्चं वारुणमुत सिन्धुदैवतमानुष्टुभम्[3]। भृगुस्ता अनेनाऽस्तौदिति। प्रथमा (१) निचृत्। 'आपो भद्राः' (५) इति विराड् जगती। परा (६) निचृत् त्रिष्टुबिति[4] ॥ ४ ॥

'सं वः' (३,१४) इति नानादेवत्यमुत[5] गोष्ठदेवताकमानुष्टुभम्। ब्रह्मा मन्त्रोक्तान् देवानस्तौत्। अन्त्या (६) आर्षी त्रिष्टुप्।

'इन्द्रमहम्' (३,१५) इत्यष्टर्चं त्रैष्टुभं वैश्वदेवमुतैन्द्राग्नम्। पण्यकामोऽथर्वा प्रथमया (१) प्रागिन्द्रमस्तौत्। परया (२) पथः। परया (३) अग्निम्। परया (४) प्रपणमग्निविक्रयं[6] च। परया (५) देवानग्निं च धनं प्रार्थयत्। उत्तरया (६) देवानिन्द्रं प्रजापतिं सवितारं सोममग्निं धनरुचिं चेति। [7]परया (७) वैश्वानरम्†[7] परया (८) जातवेदसमिति।

---

१. °लादेव° भा[१ ३]. २-२. धरुणासीति लं; धरुण्यसीति भा[१-३ ५]. ३. सिन्ध्वद्दैव° भा[१]. ४. त्रिष्टुप् भा[१]. ५. नानादैव° लं. ६. सपर्ण° भा[२]. ७-७. नास्ति बी. † विश्वानरं भा[१ २].

प्रथमा (१) भुरिक्। 'इमामग्ने' (४) इति त्र्यवसाना बृहतीगर्भा 'षट्पदा विराडत्यष्टिः[1]। 'येन धनेन' इति पञ्चमी (५) विराड् जगती। 'उप त्वा नमसा' (७) इत्यनुष्टुप्। 'विश्वाहा ते' (८) इति निचृदिति ॥ ५ ॥

'प्रातरग्निम्' (३,१६) इति प्रातःसूक्तं सप्तर्चं[2] बार्हस्पत्यमुत बहुदेवत्यं [3]त्रैष्टुभम्। अथर्वा। प्रथमा[3] (१) बहुदेवत्याऽऽर्षी जगती, तयाऽग्नीन्द्रादीन् मन्त्रोक्तान् देवानाह्वयत्। 'प्रातर्जितम्' इति पञ्च (२-६) भगदेवत्याः। तत्र 'उतेदानीम्' (४) इति भुरिक् पङ्क्तिः। एताभिरथर्वा भगमेवाऽस्तौत्। तथा अन्त्यया (७) उषोदेवत्ययोषसश्च।

'सीरा युञ्जन्ति' (३,१७) इति नवर्चं सीतादेवत्यमानुष्टुभम्। विश्वामित्रः सर्वाभिः सीतामेवाऽस्तौत्।

प्रथमा (१) आर्षी गायत्री। 'युनक्त सीरा' (२), 'शुनं सुफालाः' (५), 'घृतेन सीता' (९) इति त्रिष्टुभः। 'लाङ्गलं पवीरवत्' (३) इति पथ्या[4] पङ्क्तिः। 'शुनासीरेह' (७) इति विराट् पुरउष्णिक्। 'सीते वन्दामहे' (८) इति निचृदिति ॥ ६ ॥

'इमां खनामि' (३,१८) इति वानस्पत्यमानुष्टुभम्। अथर्वाऽनेन सूक्तेन सपत्नीपराणुदत्यै[5] बाणपर्णीमोषधिमस्तौत्। 'उत्तराहम्' (४) अनुष्टुब्गर्भा चतुष्पादुष्णिक्। 'अभि तेऽधाम्' (६) इत्युष्णिग्गर्भा पथ्या पङ्क्तिः।

[6]'संशितं मे'[6] (३,१९) इत्यष्टर्चं वैश्वदेवमुत चान्द्रमसमुतैन्द्रमानुष्टुभम्। वसिष्ठोऽनेन मन्त्रोक्तान् देवानभिष्टूयाऽमित्रान् पराणुददिति[7]।

प्रथमा (१) पथ्या बृहती। 'नीचैः पद्यन्ताम्' (३) इति भुरिग् बृहती। 'प्रेता जयता' (७) इति विराडास्तारपङ्क्तिः[8]।

---

१-१. षट्पाद्विपाद्विरा° भा[1] [4] बी. २. नास्ति भा[3]. ३-३. नास्ति लं. ४. नास्ति लं. ५. सपत्नीं परा° भा[2] [3] [4] बी. ६-६. नास्ति भा[3] [5] लं. ७. प्राणुत् भा[1-3] [5] बी; प्राणुदत् लं. ८. विराट् प्रस्ता° लं.

'एषामहम्' ( ५ ) इति [1]त्रिष्टुप्। 'उद्धर्षन्ताम्'[1] ( ६ ) इति त्र्यवसाना त्रिष्टुप्ककुम्मतीगर्भा षट्पदाऽतिजगती। 'अवसृष्टा परा पत' ( ८ ) इति पथ्या पङ्क्तिरिति ॥ ७ ॥

'अयं ते योनिः' ( ३,२० ) इति दशर्चमाग्नेयमुत मन्त्रोक्त-देवत्यमानुष्टुभम्। प्रागुक्तर्षिः प्रथमाभ्यां द्वाभ्यां ( १-२ ) पञ्चम्या ( ५ ) चाऽग्निमभिष्टूय रयिं चाऽप्रार्थयत्। सप्तभिः ( ३-४; ६-१० ) इतरान् भगादीन् देवानिति। तत्र 'इन्द्रवायू' ( ६ ) इति पथ्या पङ्क्तिः। 'वाजस्य नु' ( ८ ) इति विराड् जगती।

'ये अग्नयः' ( ३,२१ ) इति दशर्चमाग्नेयं त्रैष्टुभम्। अन्त्या-स्तिस्रः ( ८-१० ) बहुदेवत्याः। सप्तभिः प्रथमाभिः ( १-७ ) अग्नीनस्तौत्[2]। पराभिस्तिसृभिः ( ८-१० ) मन्त्रोक्तान् देवानिति।

प्रथमा ( १ ) पुरोऽनुष्टुप्। 'यं त्वा होतारम्' ( ५ ) इति जगती। 'दिवं पृथिवीम्' ( ७ ) इति विराड्गर्भा। 'उक्षान्नाय' ( ६ ) इति उपरिष्टाद्-विराड्-बृहती। 'हिरण्यपाणिम्' ( ८ ), 'यः सोमे' ( २ ), 'य इन्द्रेण' ( ३ ) इति भुरिजः। 'शान्तो अग्निः' इति द्वे ( ९-१० ) अनुष्टुभौ। पूर्वा ( ९ ) निचृदिति ॥ ८ ॥

'हस्तिवर्चसम्' ( ३, २२ ) इति बार्हस्पत्यमुत वैश्वदेवमानुष्टुभम् वर्चस्यम्। सर्वान् देवान् वर्चोऽप्रार्थयदिति प्रागुक्तर्षिः। प्रथमा ( १ ) विराट् त्रिष्टुप्। 'येन हस्ती' ( ३ ) इति पञ्चपदा परानुष्टुब् विराडतिजगती। 'यत्ते वर्चः' ( ४ ) इति त्र्यवसाना षट्पदा जगती।

'येन वेहत्' (३,२३) इति चान्द्रमसमुत योनिदेवत्यमानुष्टुभम्। ब्रह्माऽनेन पुत्रमप्रार्थयद् योनिमभिष्टूय प्रजाया इति। 'कृणोमि ते प्राजापत्यम्' ( ५ ) इति उपरिष्टाद्-भुरिग्-बृहती। 'यासां द्यौः' ( ६ ) इति स्कन्धोग्रीवी बृहती।

'पयस्वती' ( ३, २४ ) इति सप्तर्चं वानस्पत्यमानुष्टुभम्।

---

१-१. नास्ति लं. २. अग्निम° बी.

भृगुरुत प्राजापत्यं मन्त्रोक्ता अस्तौद् देवता इति। 'वेदाहम्' ( २ ) इति निचृत् पथ्या पङ्क्तिः।

'उत्तुदस्त्वा' ( ३, २५ ) इति मैत्रावरुणमानुष्टुभं कामेषु-देवताकं च। ततोऽनेन मन्त्रोक्तान् देवानस्तौत्, जायाकामश्च[1] स्ववशाय तामिति॥ ९॥

'येऽस्यां स्थ प्राच्याम्' इति द्वे ( ३,२६-२७ ) रौद्रे। पूर्वम् ( २६ ) त्रैष्टुभम्। उत्तरम् ( २७ ) आष्टिकम्[2]। अथर्वा। प्रत्यृचम-ग्न्यादिबहुदेवत्ये च। पूर्वस्य[3] पूर्वया ( २६,१ ) प्राचीस्थान् साग्नीन् हेतिनाम्नो देवानस्तौत्[4]। द्वितीयया ( २ ) दक्षिणस्थान् सकामानविष्युनाम्नो देवान्। परया ( ३ ) प्रतीचीस्थान् वैराज-नाम्नोऽब्-युक्तान् देवान्। परया ( ४ ) उदीचीस्थान् सवातान् प्रविध्यन्नाम्नो[5] देवान्। परया ( ५ ) ध्रुवास्थान् निलिम्पनाम्नो देवान् सौषधिकान्। परया ( ६ ) ऊर्ध्वास्थानवस्वन्नाम्नो[6] देवान् बृहस्पतियुक्तान्।

सर्वा ऋचः पूर्वस्य (२६) प्रत्येकं पञ्चपदा विपरीतपादलक्ष्मा भवन्ति। पूर्वा ( १ ) त्रिष्टुप्। तृतीयाचतुर्थ्यौ ( ३-४ ) भुरिजौ। द्वितीयापञ्चम्यन्त्याः ( २;५-६ ) जगत्यः।

द्वितीयस्य पूर्वया (२७,१) प्राचीं दिशमग्निमसितम् आदित्यान-स्तौत्। द्वितीयया ( २ ) दक्षिणामिन्द्रं तिरश्चिराजिं पितॄन्। तृतीयया ( ३ ) प्रतीचीं वरुणं पृदाकुमन्नम्। परया ( ४ ) उदीचीं सोमं स्वजमशनिम्। परया ( ५ ) ध्रुवां विष्णुं कल्माषग्रीवं वीरुधः। परया (६) ऊर्ध्वां बृहस्पतिं श्वित्रं वर्षमिति[7]।

अस्याऽपि षट् ( २७,१-६ ) प्रत्येकं पञ्चपदा अष्टयः। तत्र द्वितीया ( २ ) अत्यष्टिः। पञ्चमी ( ५ ) भुरिक्। एकैकं ककुम्मतीगर्भा इति॥ १०॥[8]

---

१. °कामः भा[१ १ ४] लं. २. आर्ष्टिकम् भा[१ २ ४] लं बी. ३. नास्ति मूको. ४. °स्तौदिति भा[१] लं. ५. प्रविध्यन्त ना° मूको. ६. ऊर्ध्वस्था° मूको. ७. °मिति ॥१०॥ मूको. ८. नास्ति मूको.

'एकैकयैषा' (३,२८) इति यामिन्यमानुष्टुभम्। ब्रह्माऽनेन यामिनीमस्तौत् पशुपोषणायेति। प्रथमा (१) अतिशक्करीगर्भा चतुष्पदाऽतिजगती। 'इह पुष्टिः' (४) इति यवमध्या विराट् ककुप्। 'यत्रा सुहार्दः (५) इति त्रिष्टुप्। 'यत्रा सुहार्दाम्' (६) इति विराड्गर्भा प्रस्तारपङ्क्तिः।

'यद्राजानः' (३, २९) इत्यष्टर्चं शितिपादविदेवत्यमानुष्टुभम्[1]। उद्दालकोऽनेन षड्चेन[2] (१-६) शितिपादमविमस्तौत्। सप्तमी[3] (७) कामदेवत्या, तया कामम्। परा (८) भौमी,[4] तया भूमिमिति।

प्रथमातृतीये (१;३) पथ्या पङ्क्ती। 'क इदम्' (७) इति त्र्यवसाना षट्पाद् उपरिष्टाद्दैवीबृहती ककुम्मतीगर्भा विराड् जगती। 'भूमिष्ट्वा' (८) इत्युपरिष्टाद्बृहतीति[5] ॥ ११ ॥

'सहृदयम्' (३,३०) इति सप्तर्चं चान्द्रमसं सांमनस्यमानुष्टुभम्। अथर्वाऽनेन दम्पत्योः समीकरणाय सांमनस्यमविद्वेषमस्तौदिति। 'ज्यायस्वन्तः' (५) इति विराड् जगती। 'समानी प्रपाः' (६) इति प्रस्तारपङ्क्तिः। 'सध्रीचीनान् वः' (७) इति त्रिष्टुप्।

'वि देवाः' (३,३१) इत्येकादशर्चं पाप्महदेवत्यमानुष्टुभम्[6]। ब्रह्माऽनेन सूक्तेन मन्त्रोक्तान् देवान् पाप्मघ्नानस्तौत्[7]। 'वीमे' (४) इति भुरिक्। 'त्वष्टा दुहित्रे' (५) इति विराट् प्रस्तारपङ्क्तिरिति ॥ १२ ॥

---

१. शितिपादमवि° मूको. २. षडर्चेन भा[1 2 5] लं बी. ३. अष्टमी भा[1 2 5] लं. ४. भौमा भा[1 2 5]. ५. °ष्टाद्विराड्बृ° भा[1]. ६. °प्महादे° मूको ७. पाप्मघ्नास्तौत् भा[1] बी; पाप्मघ्न्यास्तौत् भा[2 5]; पापघ्नोऽस्तौत् लं.

# अथर्ववेदे चतुर्थं काण्डम्

'ब्रह्म जज्ञानम्' इति काण्डे [1] [2]सप्तर्चं सूक्तं[2] प्रकृतिरन्या[3] विकृतिरित्यवगच्छेत् ।

'ब्रह्म जज्ञानम्' (४,१) इति वेनो बार्हस्पत्यसुताऽऽदित्यदैवतम् । 'य आत्मदाः' (४,२) इत्यष्टर्चमात्मदैवतम् । उभे (१-२) त्रैष्टुभे[३] भवतः । तां तां देवतां द्वाभ्याम् (१-२) अस्तौत् । 'इयं पित्र्या' (४,१,२), 'सं बुध्न्यात्' (४,१,५) इति भुरिजौ 'आपो अग्रे' (४,२,६) इति पुरोऽनुष्टुप् । 'आपो वत्सम्' (४,२,८) इति उपरिष्टाज्ज्योतिः[४] ।

'उदितः' (४,३) इति रौद्रमुत व्याघ्रदेवत्यमानुष्टुभम्[५] । अथर्वाऽनेन मन्त्रोक्तं व्याघ्रमस्तौत् । प्रथमा (१) पथ्या पङ्क्तिः । 'अक्ष्यौ च ते' (३) इति गायत्री । 'यत् संयमः' (७) इति ककुम्मतीगर्भोपरिष्टाद्बृहती ।

'यां त्वा' (४,४) इत्यष्टर्चं वानस्पत्यमानुष्टुभम् । अनेन मन्त्रोक्तामुच्छुष्मौषधिं[६] खात्वाऽस्तौदिति च । 'उच्छुष्मौषधीनाम्' (४) इति पुरउष्णिक् । 'अद्याग्ने' (६) इति बहुदेवत्या । इमे द्वे (६-७) भुरिजौ । परा (८) उष्णिक् ।

'सहस्रशृङ्गः' (४,५) इति ब्रह्मा । स्वापनं वार्षभम्[७] । आनुष्टुभम् । 'न भूमिम्' (२) इति भुरिक् । 'स्वप्न स्वप्ना'[७] (७) इति पुरस्ताज्ज्योतिस्त्रिष्टुबिति[८] ॥ १३ ॥

---

१. काण्डं भा[१-३ ५] बी. २-२. सप्तर्चसूक्त प्रकृ° लं. ३. नास्ति भा[१]. ४. °ज्योतिरिति भा[३] बी. ५. °घ्रदैव° भा[३]. ६. १-२ सूर्यः, प्रजापतिः; ४ इन्द्रः; ५ आपः, सोमः; ६ अग्निः, सरस्वती, ब्रह्मणस्पतिः सात. ७. चार्ष° भा[३ ६]. ८. °स्त्रिष्टुप् भा[१ २ ५] लं.

'ब्राह्मणो जज्ञे' इति द्वे ( ४,६-७ ) सूक्ते। पूर्वम् (६) अष्टर्चम्। गरुत्मान्। तक्षकदेवत्यम्। उत्तरम् (७) वानस्पत्यम्। आनुष्टुभे। द्वाभ्यां मन्त्रोक्तदेवता अस्तौत्। 'वि ते मदम्' (४,७,१) इति स्वराट्।

'भूतो भूतेषु' ( ४,८ ) इति राज्याभिषेक्यं चान्द्रमसमाप्यमानुष्टुभम्। अथर्वाऽङ्गिरा मन्त्रोक्ता देवता अनेनाऽस्तौत्। आद्या (१) भुरिक् त्रिष्टुप्। 'आतिष्ठन्तम्' (३) इति त्रिष्टुप्। 'एना व्याघ्रम्' (७) इत्याद्यावत्। 'या आपः' (५) इति विराट् प्रस्तारपङ्क्तिरिति।

'एहि जीवम्' (४,९) इति दशर्चम्। भृगुः। त्रैकाकुदाऽञ्जनदैवतमानुष्टुभम्। अनेन सूक्तेन तदेवाऽञ्जनं बहुधाऽस्तौत्। 'परिपाणम्' (२) इति ककुम्मती। परा (३) पथ्या पङ्क्तिरिति ॥ १४ ॥

'वाताज्जातः' (४,१०) इति शङ्खमणिसूक्तं[1] तद्दैवतमानुष्टुभम्। [2]अथर्वा सर्वाभिः[2] कृशनमस्तौत्। 'हिरण्यानाम्'[3] (६) इति पथ्या पङ्क्तिः। 'देवानामस्थि' (७) इति पञ्चपदा परानुष्टुप् शक्वरीति।

'अनड्वान् दाधार' (४,११) इति द्वादशर्चम्। भृग्वङ्गिराः। आनुडुहं त्रैष्टुभम्। तां देवतामिन्द्ररूपेणैवाऽस्तौदिति।

प्रथमाचतुर्थ्यौ (१,४) जगत्यौ। द्वितीया (२) भुरिक्। 'इन्द्रो रूपेण' (७) इति त्र्यवसाना षट्पदाऽनुष्टुब्गर्भोपरिष्टाज्जागता निचृच्छक्वरी। 'मध्यमे तदनडुहः' इति पञ्च (८-१२) अनुष्टुभ इति ॥ १५ ॥

'रोहिण्यसि' (४,१२) इति वानस्पत्यमानुष्टुभम्। भृगुर्मन्त्रोक्तां देवतामस्तौदिति। प्रथमा (१) त्रिपदा गायत्री।

---

१. °माणिं सू° भा[२ ४] बी. २-२. अथर्वाऽऽभिः भा[२] बी. ३. अग्निहिंर° भा[१-३ ४] लं.

'स उत्तिष्ठ' (६) इति त्रिपदा यवमध्या भुरिग् गायत्री। 'यदि कर्तम्' (७) इति बृहतीति।

'उत देवाः' (४, १३) इति चान्द्रमसमुत वैश्वदेवमानुष्टुभम्। शन्तातिरनेन मन्त्रोक्तान्- विश्वान् देवानस्तौदिति।

'अजो हि' (४,१४) इति नवर्चम्। भृगुः आज्यमाग्नेयं त्रैष्टुभम्। तावनेनाऽस्तौत्। 'क्रमध्वमग्निना' (२), 'स्वर्यन्तः' (४) इत्यनुष्टुभौ। 'पृष्ठात् पृथिव्याः' (३) इति प्रस्तारपङ्क्तिः। 'पञ्चौदनम्' (७), 'श्रृतमजम्' (९) इति जगत्यौ। 'प्रतीच्यां दिशि' (८) इति पञ्चपदाऽतिशाक्करीति॥ १६॥

'समुत्पतन्तु' (४,१५) इति षोडशर्चम्। अथर्वा। मरुत्पर्जन्यदेवत्यं त्रैष्टुभम्। प्रथमया (१) प्रथमं सर्वा दिशोऽस्तौत्। पराभ्यां (२-३) वीरुधश्च। परया (४) मारुतपर्जन्यौ[1]। [2]पराभिः पञ्चभिः[2] (५-९) मरुतः। [3]परया (१०) अग्निम्[3]। परया (११) प्रजापतिं स्तनयित्नुना सहाऽऽह्वयत्। परया (१२) वरुणम्। तिसृभिः (१३-१५) ततो मण्डूकान् पितृंश्च। परया (१६) वातमप्रार्थयत्।

आद्ये द्वे (१-२), 'उदीरयत' (५) इति विराड्जगत्यः। 'अपामग्निः' (१०) इति भुरिक्। 'गणास्त्वा' (४) इति विराट् पुरस्ताद्बृहती। 'सं वोऽवन्तु', (७) इति, 'संवत्सरं शशयानाः' (१३) इति द्वे अनुष्टुभौ[4]। 'आपो विद्युत्' (९) इति पथ्या पङ्क्तिः। 'अपो निषिञ्चन्' (१२) इति पञ्चपदा अनुष्टुब्गर्भा भुरिक्। 'खण्वखा३इ खैमखा३इ' (१५) इति शङ्कुमत्यनुष्टुबिति[5]॥ १७॥

'बृहन्नेषाम्' (४,१६) इति सत्यानृताऽन्वीक्षणसूक्तं[6] नवर्चम्।

---

१. °पर्जन्यान् भा[१] [५] लं; °पर्जन्यात् भा[२] [३] बी. २-२. परया मूको. ३-३. नास्ति मूको. ४ आनुष्टुभे भा[१]. ५. °नुष्टुप् भा[२] [५]. ६. °न्वीचक्षण° भा[१-३] [५].

ब्रह्मा। वारुणं त्रैष्टुभम्। आद्याभिश्चतसृभिः (१-४) दिव्यसाक्षिदैवविज्ञानम्[1] अकरोत्। परया (५) वरुणेरणम्[2], पराभ्याम् (६-७) वरुणप्रार्थनम्। ततो द्वाभ्याम् (८-९) वरुणोक्तिरिति।

प्रथमा (१) अनुष्टुप्। 'यः समाम्यः' (८) इति त्रिपान्महाबृहती। 'तैस्त्वा' (९) इति विराण्नाम त्रिपाद्गायत्री। 'सर्वं तद्राजा' (५) इति भुरिक्। 'शतेन पाशैः' (७) इति जगतीति[3]।

'ईशानां त्वा' इति चतुर्विंशत्यृचं[4] त्रयं (४,१७-१९) सूक्तानाम्। शुक्रः। अपामार्गवनस्पतिदेवत्यमानुष्टुभम्। सर्वाभिरपामार्गवीरुधमस्तौत्। ततः कृत्यामशमयत्।

'यश्चकार न शशाक' (१८,६) इति बृहतीगर्भा। 'ब्राह्मणेन पर्युक्तासि' (१९,२) पथ्या पङ्क्तिरिति ॥ १८ ॥

'आ पश्यति' (४,२०) इति नवर्चं [5]मातृनामा ऋषिर्मातृनामादैवतमानुष्टुभम्[5]। अनेनौषधिमेवाऽस्तौत्[6]। प्रथमा (१) स्वराट्। अन्त्या (९) भुरिक् इति।

'आ गावः' (४,२१) इति ब्रह्मा। गव्यं त्रैष्टुभम्। अनेन गावोऽस्तौदिति। 'इन्द्रो यज्वने' इति तिस्रः (२-४) जगत्य इति।

'इममिन्द्र वर्धय' (४,२२) इति वसिष्ठः। ऐन्द्रं त्रैष्टुभम्। सोऽथर्वा क्षत्रियाय राज्ञे चन्द्रमसे प्रथमाभिः पञ्चभिः (१-५) निरमित्रीकरणमुखेन[7] इन्द्रमप्रार्थयत् ग्रामगवाश्वादि [8]'सर्वं राज्योपकरणं[8] च। ततः पराभ्यामन्त्याभ्याम् (६-७) इन्द्ररूपेण[9] स्वयमेव [10]क्षत्रियं राजानं[10] चन्द्रमसमाशिषा प्राणुददिति ॥ १९ ॥

---

१. °व्यसाक्षिदेववि° भा[१-३, ५] बी. २. वरुणं लं. ३. जगती भा[५]. ४. °विंशर्चम् मूको. ५-५, °नामर्षि° भा[१-३] लं. ६. °नेन मातृनामोष° भा[१-३, ५] लं. ७. °करणमुख्येनें° मूको. ८-८. सर्वरा° भा[१-३, ५]. ९. इन्द्रो रू° बी. १०-१०. क्षत्रियरा° भा[१-३, ५] बी.

'अग्नेर्मन्वे' इति सप्त ( ४,२३-२९ ) मृगारसंज्ञकानि सूक्तानि। मृगारः। नानादेवत्यानि त्रैष्टुभानि। ततः 'अग्नेर्मन्वे' ( २३ ) इत्यनेन प्रथमं प्रचेतसमग्निमस्तौत्। 'इन्द्रस्य मन्महे' ( २४ ) इति इन्द्रम्। 'वायोः सवितुः' ( २५ ) इति वायुसवितारौ। 'मन्वे वां द्यावापृथिवी' ( २६ ) इति द्यावापृथिव्यौ। 'मरुतां मन्वे' ( २७ ) इति मरुतो देवान्। 'भवाशर्वौ मन्वे वाम्' ( २८ ) इति भवाशर्वावुत रौद्रम्। अथर्वा। 'मन्वे वां मित्रावरुणौ' ( २९ ) इति मित्रावरुणौ, तन्मिषतः परानृषीनिति उत द्रुह्वणः।

तत्र 'यामन्यामन्' ( २३,३ ) इति पुरस्ताज्ज्योतिष्मती। 'सुजातं जातवेदसम्' ( २३,४ ) इत्यनुष्टुप्। 'येन देवाः' ( २३,६ ) इति प्रस्तारपङ्क्तिरिति। 'इन्द्रस्य मन्महे' ( २४,१ ) इति शाक्करगर्भा[1] पुरःशाक्करी। 'तव व्रते' ( २५,३ ) इत्यतिशाक्करी। 'मन्वे वां द्यावापृथिवी' ( २६,१ ) इति पुरोऽष्टिः[2] इति। उभे जगत्यौ (?)। 'उप श्रेष्ठा नः' ( २५,७ ) इति पथ्या बृहती। 'भवाशर्वौ मन्वे वाम्' ( २८,१ ) इति द्व्यतिजागतगर्भा भुरिक्। 'यन्मेदम्' ( २६,७ ) इति शाक्करगर्भाऽतिमध्येज्योतिः 'ययो रथः' ( २९, ७ ) इति शाक्करीगर्भा[3] जगतीति[4]।

सर्वेषां मृगाराणां[5] सर्वाः[6] संगत्यैवमेकोनपञ्चाशत्। परानुष्टुभः ( ? ) इति ॥ २० ॥

'अहं रुद्रेभिः' ( ४,३० ) इत्यष्टर्चम्। अथर्वा। वाग्देवत्यं त्रैष्टुभम्। स्वयमेव 'अहम्' इति वाचं "सर्वरूपां सर्वात्मिकां" सर्वदेवमयीमित्यस्तौत्। 'अहं सोमम्' ( ६ ) इति जगती।

'त्वया मन्यो', 'यस्ते मन्यो' इति द्वे ( ४,३१-३२ ) ब्रह्मास्कन्दः। मन्युदैवते त्रैष्टुभे। आभ्यां "सेनां योजयन् मन्युं सूक्ताभ्याम्"

---

१. शाक्करीग° भा[१-३ ५] लं. २. पुरोष्णिक् भा[२]. ३. शाक्कर° भा[५]. ४. परा ज° भा[२]. ५. शृंगाणां मूको. ६. सर्वं बी. ७-७. सर्वरूपसर्वा° भा[१-३ ५] बी. ८-८. सेनान्योजयेन्मन्युः सूक्ताम् भा[१]; सेनाभ्याजयेन्मन्युः सूक्ताम् भा[२] बी; सेनाजयेन सूक्तम् लं; सेन्याजयेन्मन्युः सूक्ताभ्याम् भा[१ ५].

अस्तूयत। 'अग्निरिव मन्यो' ( ३१,२ ), 'एको बहूनाम्' ( ३१,४ ) इति भुरिजौ। 'विजेषकृत्' इति तिस्रः ( ३१,५-७ ) 'यस्ते मन्यो' ( ३२,१ ) इति जगत्यः।

'अप नः शोशुचत्' ( ४,३३ ) इति ब्रह्मा। पापघ्नम्[1] आग्नेयमष्टर्चं गायत्रम्।

'ब्रह्मास्य' ( ४,३४ ) इत्यष्टर्चम्। अथर्वा। ब्रह्मास्यौदनं[2] त्रैष्टुभम्। 'विष्टारिणम्' ( ४ ) इति उत्तमा भुरिक्। 'एष यज्ञानाम्' ( ५ ) इति त्र्यवसाना सप्तपात् कृतिः। 'घृतह्रदाः' ( ६ ) इति पञ्चपदाऽतिशक्करी। परा ( ७ ) भुरिक् शक्करी। 'इदमोदनम्' ( ८ ) इति जगती।

'यमोदनम्' ( ४,३५ ) इति प्रजापतिः। आतिमार्त्यं[3] त्रैष्टुभम्। 'यो दाधार' ( ३ ) इति भुरिग् जगतीति[4]।

'तान्त्सत्यौजाः' ( ४,३६ ) इति चातनः। सत्यौजसमाग्नेयमानुष्टुभम्। 'ये मा क्रोधयन्ति' ( ९ ) इति भुरिगिति ॥ २१ ॥

'त्वया पूर्वम्' ( ४,३७ ) इति द्वादशर्चम्। बादरायणिः। अजशृङ्ग्यप्सरोदेवत्यमानुष्टुभम्। प्रथमाभ्यां द्वाभ्याम् ( १-२ ) ओषधिमस्तौत्। पराभिस्तिसृभिः ( ३-५ ) अप्सरसः। परया ( ६ ) ओषधिम्। पराभिः षड्भिः ( ७-१२ ) गन्धर्वाप्सरौषधिरिति।

'नदीं यन्तु' ( ३ ) इति त्र्यवसाना षट्पदा त्रिष्टुप्। 'यत्र वः प्रेङ्खाः' ( ५ ) इति प्रस्तारपङ्क्तिः। 'आ नृत्यतः' ( ७ ) इति परोष्णिक्। 'श्वेवैकः' ( ११ ) इति षट्पदा जगती। चरमा[5] ( १२ ) निचृदिति।

'उद्भिन्दतीम्' ( ४,३८ ) इति द्विदेवत्यमानुष्टुभम्। सोऽक्षैर्विदेवनाय आद्याभिश्चतसृभिः ( १-४ ) अप्सरामाह्वयत्। पराभिस्तिसृभिः ( ५-७ ) वाजिनीवन्तमृषभमस्तौत्।

---

१. पाप्मत्यं मूको; पाप्मन्यं ह्वि. २. ब्रह्मास्यौद॰ मूको. ३. ॰मात्र्यं भा[१]; ॰मर्त्यं ह्वि. ४. पराजगती भा[१]. ५. परया भा[१-३, ५] बी.

'यायैः' (३) इति षट्पदा त्र्यवसाना जगती। तथा 'सूर्यस्य रश्मीन्' (५) इति भुरिग् अत्यष्टिः। 'अन्तरिक्षेण' इति पूर्वा (६) त्रिष्टुप्। उत्तरा (७) त्र्यवसाना पञ्चपदाऽनुष्टुब्गर्भा पुरउपरिष्टाज्ज्योतिष्मती जगतीति ॥ २२ ॥

'पृथिव्यामग्नये' (४, ३९) इति दशर्चम्। अङ्गिराः। सान्नत्यं नानादेवत्यं पाङ्क्तम्। तथाऽन्त्ये द्वे (९-१०) आग्नेय्यौ त्रिष्टुभौ।

तत्र प्रथमाभ्यां द्वाभ्यां (१-२) पृथिव्यग्नी स्तुत्वा प्रार्थयत्। पराभ्यां (३-४) वाय्वन्तरिक्षे। पराभ्याम् (५-६) दिवादित्यौ। पराभ्याम् (७-८) दिक्चन्द्रमसः। ततः पराभ्यां (९-१०) ब्रह्मा जातवेदसमग्निं प्रार्थ्याऽयजदिति।

'पृथिव्याम्' (१), 'अन्तरिक्षे' (३), 'दिवि' (५), 'दिक्षु' (७) इति त्रिपादो महाबृहत्यः। 'पृथिवी' (२), 'अन्तरिक्षम्' (४), 'द्यौः' (६), 'दिशः' (८) एताश्चतस्रः संस्तारपङ्क्तयः।

'ये पुरस्तात्' (४,४०) इति कृत्याप्रतिहरणम् अष्टर्चम्[1]। शुक्रः। बहुदेवत्यं त्रैष्टुभम्। प्रथमया (१) प्राच्यामग्निमस्तौत्। द्वितीयया (२) दक्षिणस्यां यमम्। तृतीयया (३) प्रतीच्यां वरुणम्। परया (४) उत्तरतः सोमम्। परया (५) अधस्ताद् भूमिम्। परया (६) अन्तरिक्षे वायुम्। परया (७) उपरिष्टात् सूर्यम्। ततः (८) दिगन्तर्देशेभ्यः 'सर्वत्र ब्रह्मा' इति ब्रह्माणं सर्वत्र जातवेद आभिमुख्येनाऽस्तौत्। 'ये दक्षिणतः' (२), 'ये दिशामन्तर्देशेभ्यः' (८) इति जगत्यौ। द्वितीया[2] (८) पुरोऽतिशक्करीपादयुगिति ॥ २३ ॥

इति ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां

द्वितीयः पटलः समाप्तः[3] ॥ २ ॥

---

१. नास्ति लं. २. द्वितीयया भा[१ २ ५] गु बी. ३. नास्ति भा[१ ५] लं; संपूर्णम् भा[२].

## अथ

# तृतीयं पटलम्

## अथर्ववेदे पञ्चमं काण्डम्

अथैवं वक्ष्यमाणमन्त्रेषु सूक्तप्रकृतिः सर्षिच्छन्दोदैवतेषु[१] अनुगच्छेत् सर्वत्रेति ।

'ऋधङ्मन्त्रः', 'तदिदास' इति द्वे (५,१-२) वारुणे त्रैष्टुभे । 'ममाग्ने वर्चः' (५,३) इत्याग्नेयम् । पूर्वे (५,१-२) नवके । परम् (५,३) एकादशकं त्रैष्टुभम् । बृहद्दिवोऽथर्वा ।

प्रथमस्याऽऽद्या (५,१,१) परावृहती त्रिष्टुप् । अन्त्या (५,१,९) त्र्यवसाना षट्पदाऽत्यष्टिः । 'ये नः सपत्नाः' (५,३,१०) इति विराड् जगती । 'उतामृतासुः' (५,१,७) इति विराट् । 'एवा महान्' (५,२,९), 'अग्ने मन्युम्'[२] (५,३,२) इति भुरिजौ । पूर्वा (५,२,९) पराऽतिजागता ।

पूर्वसूक्तद्वयेन[३] (५,१-२) वरुणमस्तौत् । 'ममाग्ने वर्चः' इति द्वाभ्याम् (५,३,१-२) ऋग्भ्यां विहवेऽग्निम्[४] । पराभ्याम् (३-४) देवान् । परया (५) द्रविणादिप्रार्थनम्[५] । परा (६) [६]वैश्वदेवी । परा (७) सौमी । तत्परा (८) ऐन्द्रीं† । परे[६] (९-१०) वैश्वदेव्यौ । परमा (११) ऐन्द्रीति च ॥ १ ॥

'यो गिरिषु' (५,४) दशकं भृग्वङ्गिराः । यक्ष्मनाशनकुष्ठदेवत्यमानुष्टुभम् । सर्वाभिः [७]कुष्ठं तक्मनाशनं[७] चाऽस्तौत्[८] ।

---

१. सा ऋषि° भा[५]; सार्ष° लं; सार्षि° भा[१-२] बी. २-२. नास्ति भा[२]. ३ उरुव्यचा नः (५,३,८) पूर्वसू° मूको. ४. विहव्योऽग्निम् मूको. ५. द्रविणोदादिप्रा° मूको. ६-६ नास्ति बी. † रौद्री भा[१-२][५]. ७-७. कुष्ठना° भा[२] बी लं. ८. वास्तौत् भा[१-२] गु बी.

'इमं मे कुष्ठ' (६) इति गायत्री। 'हिरण्ययाः पन्थानः' (५) इति भुरिक्। 'शीर्षामयम्' (१०) इत्युष्णिग्गर्भा निचृत्।

'रात्री माता' (५,५) इति लाक्षिकमानुष्टुभं[1] नवकम्।

'ब्रह्म जज्ञानम्' (५,६) सोमारुद्रीयं चतुर्दशकं त्रैष्टुभम्। एतदादीनि 'समिद्धो अद्य' इत्यतः प्राचीनानि (५,५-१२) अथर्वा। पूर्वेण (५,५) लाक्षामस्तौदिति।

उत्तरस्याऽऽद्यया (५,६,१) ब्रह्मादित्यम्। द्वितीयया (२) कर्माणि। पराभ्याम् (३-४) रुद्रगणान्। 'न्वेतेन' इति तिसृभिः (५-७) सोमारुद्रौ। 'मुमुक्तम्' (८) इत्येकावसानाऽऽर्च्यनुष्टुब् द्विपदा। तयोरेव प्रार्थनम्। परया (९) हेतिम्। [2]परया (१०) अग्निम्[2]। पराभिश्चतसृभिः (११-१४) सर्वात्मकं रुद्रमिति।

तत्र 'अनाप्ता ये' (५,६,२) इत्यनुष्टुप्। 'सहस्रधार एव' इति द्वे (३-४) जगत्यौ। तत्र 'पर्यू षु' (४) इत्यनुष्टुबुष्णिक्त्रिष्टुब्गर्भा पञ्चपदा जगती[3]। 'न्वेतेन' इति तिस्रः (५-७) त्रिपदा विराण्नामगायत्र्यः। 'योऽस्मान्' (१०) इति प्रस्तारपङ्क्तिः। 'इन्द्रस्य गृहः' इति चतस्रः (११-१४) पङ्क्तयः। अत्र तुरीया (१४) स्वराडिति॥ २॥

'आ नो भर' (५,७) इति दशकं बहुदेवत्यमानुष्टुभम्। आद्यास्तिस्रः (१-३) अरातीयाः। परे (४-५) सारस्वत्यौ। पराः सर्वाः (६-१०) पुनररातीयाः। या यद्देवत्येति पारिभाषिकं स्मरणमिति। सरस्वत्या मधुवाचोऽप्रार्थयत्, इन्द्राग्निभ्यां वसूनि चेति। प्रथमा (१) विराड्गर्भा प्रस्तारपङ्क्तिः। 'सरस्वतीमनुमतिम्' (४) इति पथ्या बृहती। 'मा वनिम्' (६) इति प्रस्तारपङ्क्तिः।

'वैकङ्कतेन' (५,८) इति नवकमानुष्टुभं नानादेवत्यम्।

---

१. लाक्षिमकं भा॰ २. २-२. नास्ति मूको. ३. नास्ति मूको.

प्रथमे द्वे (१-२) आग्नेय्यौ। परा (३) वैश्वदेवी। परा अवशिष्टाः (४-९) ऐन्द्र्यो भवन्ति।

'इन्द्रा याहि' (२) इति त्र्यवसाना षट्पदा[1] जगती। 'यदसौ' (३), 'अति धावत' (४) इति भुरिक्पथ्यापङ्क्ती। 'यदि प्रेयुः' (६) इत्यास्तारपङ्क्तिः[2]। 'यानसौ' (७) इति द्व्युष्णिग्गर्भा पथ्या पङ्क्तिः। 'अत्रैनान्' (९) इति त्र्यवसाना षट्पदा द्व्युष्णिग्गर्भा जगतीति[3]॥ ३॥

'दिवे स्वाहा', 'अश्मवर्म मे' इति चोभे (५,९-१०) वास्तोष्पत्ये अष्टके। ब्रह्मा।

आद्यस्य (५,९) आद्या[4] (१) दैवी बृहती। द्वितीया (२) दैवी त्रिष्टुप्। तृतीया (३) दैवी जगती। एवं परा (४) जगती। परा (५) बृहती। परा (६) त्रिष्टुप्। 'सूर्यो मे' (७) इति विराडुष्णिग्बृहतीगर्भा[5] [6]पञ्चपदा जगती। परा (८) पुरस्कृतित्रिष्टुब्बृहतीगर्भा[6] चतुष्पदाऽतिजगतीति त्र्यवसना च।

द्वितीयस्याऽऽद्याः षट् (५,१०,१-६) यवमध्यास्त्रिपदा गायत्र्यः। परा (७) यवमध्या ककुप्। 'बृहता मनः' (८) पुरोधृतिद्व्यनुष्टुब्गर्भा पराष्टिस्त्र्यवसाना चतुष्पदाऽतिजगती।

'कथं महे' (५,११) इत्येकादशकं[7] त्रैष्टुभं वारुणम्[8]। अथर्वाऽनेन प्रश्नोत्तरमुखेन मन्त्रोक्तदेवतामस्तौत्। प्रथमा (१) भुरिक्। 'सत्यमहम्' (३) इति पङ्क्तिः। 'एकं रजसः' (६) इति पञ्चपदाऽतिशक्वरी। 'देवो देवाय' (११) इति त्र्यवसाना षट्पदाऽत्यष्टिः[9]।

'समिद्धो अद्य' (५,१२) इत्येकादशर्चं त्रैष्टुभं जातवेदस्यम्[10]।

---

१. षट्पादा लं. २. प्रस्तार° भा[१-३] लं. ३. जगती भा[१-३ ५] लं. ४. स्वाहा मूको. ५. द्विराड्° भा[१ ५] लं. ६-६. नास्ति भा[१]. ७. °दशर्चम् भा[१ २ ५]. ८. नास्ति भा[१] बी. ९. षट्पादत्यष्टिः भा[१ ५] लं. १०. °वेदसम् मूको.

अङ्गिरा अनेनाऽग्निमस्तौत् । 'आजुह्वानः' ( ३ ) इति पङ्क्तिरिति[1] ॥४॥

'ददिर्हि'[2] ( ५,१३ ) इत्येकादशर्चं जागतं तक्षकदेवत्यम् । गरुत्मान् अनेन विषमेवाऽस्तौदिति ।

'यत्ते अपोदकम्' ( २ ) इत्यास्तारपङ्क्तिः । 'असितस्य' ( ६ ) इति पथ्या पङ्क्तिः । 'चक्षुषा ते चक्षुः' ( ४ ), 'आलिगी च' ( ७ ) इति द्वे अनुष्टुभौ । 'कर्णा श्वावित्' ( ९ ) इति भुरिक् । 'कैरात' ( ५ ) इति त्रिष्टुप् । 'ताबुवम्'[3] इति द्वे ( १०-११ ) निचृद्-गायत्र्यौ ।

'सुपर्णस्त्वा' ( ५,१४ ) इति त्रयोदशकं वानस्पत्यं कृत्या-प्रतिहरणमानुष्टुभम् । शुक्रो द्वाभ्याम् ( १-२ ) ओषधिमस्तौत् । पराभिः ( ३-१३ ) कृत्यादूषणमिति ।

'रिश्यस्येव' ( ३ ), 'कृत्याः सन्तु कृत्याकृते' ( ५ ) 'इष्वा ऋजीयः' ( १२ ) इति भुरिजः । 'अग्ने पृतनाषाट्' ( ८ ) इति[4] त्रिपदा विराट् । 'अग्निरिवैतु' ( १३ ) इति स्वराट् । 'पुत्र इव पितरम्' (१०) इति निचृद् बृहती । 'उदेणीव' ( ११ ) इति साम्नां त्रिपात् त्रिष्टुबिति[5] ॥ ५ ॥

'एका च मे' ( ५,१५ ) इत्येकादशकं विश्वामित्रो वानस्पत्य-मानुष्टुभम् । अनेन मधुलाम्[6] ओषधिमस्तौदिति ।

'चतस्रश्च मे' ( ४ ) इति पुरस्ताद्बृहती । 'पञ्च' ( ५ ), 'सप्त' ( ७ ), 'अष्ट' ( ८ ), 'नव च मे' ( ९ ) इति भुरिज इति ।

'यद्येकवृषः' ( ५,१६ ) इत्येकावसानमेकादशर्चमेकवृषभदेव-त्यं द्वैपदम् । अनेन प्रागुक्तर्षिरेकवृषमस्तौत् ।

'यदि द्वि°' (२), 'यदि त्रि°' ( ३ ), 'यदि षड्°' ( ६ ) एता आसुर्य-नुष्टुभः । 'यद्येक°' (१), 'यदि चतुर्°' (४), 'यदि पञ्च°' (५), 'यदि सप्त°' (७)

---

१. पङ्क्तिः भा[१-३ ५]. २. ददिः भा[१ २]. ३. °वन् भा[१-३ ५] बी; बुवन् लं. ४. नास्ति लं. ५. त्रिष्टुप् भा[१-३ ५]. ६. मधुमधुलाम् भा[२ ५].

'यद्यष्ट०' (८), 'यदि नव°' (९), 'यदि दश°' (१०) एताः साम्न्युष्णिहः। 'यद्येकादशः' (११) इत्यासुरी गायत्रीति।

'तेऽवदन्' (५,१७) इत्यष्टादशकम्। मयोभूः। ब्रह्मजायादेवत्यमानुष्टुभम्। अनेन सूक्तेन सोमेन बृहस्पतिजायापहरणमकारि। तदाख्यामिषतः[1] मन्त्रोक्तां देवानां ब्रह्मजायामस्तौदिति। पूर्वाः षड् (१-६) त्रिष्टुभः।

'नैतां ते', 'अतिमात्रम्' इति द्वे (५,१८-१९) पञ्चदशाके ब्रह्मगवीदेवत्ये आनुष्टुभे। आभ्यां ब्रह्मगवीं ब्राह्मणं चाऽस्तौत् ब्रह्मगवी ब्रह्मज्यमनिन्दयन्।

'निर्वै क्षत्रम्' इति द्वे (१८,४-५), 'जिह्वा ज्या' इति द्वे (८-९), 'देवपीयुः' (१३) इति त्रिष्टुभः। पूर्वा (४) भुरिक्। 'ये बृहत्सामानम्' (१९,२) इति विराड् पुरस्ताद्बृहती। 'अष्टापदी चतुरक्षी' (७) इत्युपरिष्टाद्बृहतीति[2] ॥ ६ ॥

'उच्चैर्घोषः', 'विहृदयम्' इति द्वे (५,२०-२१) द्वादशाके। ब्रह्मा। वानस्पत्यदुन्दुभिदेवत्ये[3]। पूर्वम् (२०) त्रैष्टुभम्। उत्तरम् (२१) आनुष्टुभम्। द्वाभ्यां (२०-२१) सपत्नसेनापराजयाय देवसेनाविजयाय च दुन्दुभिमस्तौदिति। पराभिस्तिसृभिः (२१,१०-१२) आदित्यादीन् देवानप्रार्थयत्।

पूर्वस्य पूर्वा (२०,१) जगती। 'विहृदयम्' (२१,१), 'यथा मृगाः' (४) इति द्वे पथ्यापङ्क्ती। 'यथा श्येनात्' (६) इति जगती। 'यूयमुग्राः' (११) इति बृहतीगर्भा त्रिष्टुप्। 'एता देवसेनाः' (१२) इति त्रिपदा यवमध्या गायत्रीति।

'अग्निस्तक्मानम्' (५,२२) इति चतुर्दशकम्। भृग्वङ्गिराः। तक्मनाशनदेवत्यमानुष्टुभम्। तक्मापबाधायाऽनेन देवानप्रार्थयत्, तक्मनाशनमस्तौदिति च।

---

१. °मिषता मूको. २. °बृहती भा[1] लं. ३. °भिदैव° भा[1] [3].

प्रथमे द्वे ( १-२ ) त्रिष्टुभौ। पूर्वा ( १ ) भुरिक्। 'ओको अस्य' ( ५ ) इति विराट् पथ्या बृहती।

'ओते मे' ( ५,२३ ) इति त्रयोदशकमैन्द्रमानुष्टुभम्। काण्वोऽनेन क्रिमिजम्भनाय देवानप्रार्थयत्। 'सर्वेषां च क्रिमीणाम्' ( १३ ) इति विराडिति[1] ॥ ७ ॥

'सविता प्रसवानाम्' ( ५,२४ ) इति सप्तदशकम्। अथर्वा। ब्रह्मकर्मात्मदेवत्यमिति। सवितारं[2] प्रथमया ( १ ) स्वात्मावनाय[3] कर्मणि प्रार्थ्याऽजुहोत्[4]। द्वितीयया ( २ ) अग्निम्। तृतीयया ( ३ ) द्यावापृथिव्यौ। चतुर्थ्या ( ४ ) वरुणम्। पञ्चम्या ( ५ ) मित्रावरुणौ। षष्ठ्या ( ६ ) मरुतः। सप्तम्या ( ७ ) सोमम्। अष्टम्या ( ८ ) वायुम्। नवम्या ( ९ ) सूर्यम्। दशम्या ( १० ) चन्द्रमसम्[5]। एकादश्या ( ११ ) इन्द्रम्। द्वादश्या ( १२ ) मरुतां पितरम्। त्रयोदश्या ( १३ ) मृत्युम्। परया ( १४ ) यमम्। परया ( १५ ) पितॄन् परान्[6]। परया ( १६ ) ततानवरान्। अन्त्यया[7] ( १७ ) ततांस्ततामहान्[8] इति।

सर्वाश्चतुष्पादोऽतिशक्वर्यः[9]। 'इन्द्रो दिवः' ( ११ ) इति शक्वरी। 'पितरः परे' इति तिस्रः ( १५-१७ ) त्रिपादः। तत्र पूर्वे द्वे ( १५-१६ ) भुरिग्जगत्यौ। अन्त्या ( १७ ) विराट् शक्वरी ॥ ८ ॥

'पर्वताद्दिवः' ( ५,२५ ) इति त्रयोदशकं योनिगर्भदेवत्यमानुष्टुभम्। ब्रह्माऽनेन गर्भार्थं देवानप्रार्थयत्। तां गर्भं चाऽस्तौदनेन सूक्तेनेति[10]। अन्त्या ( १३ ) विराट् पुरस्ताद्बृहतीति।

'यजूंषि यज्ञे', 'ऊर्ध्वा अस्य' इति द्वे ( ५, २६-२७ ) द्वादशके। पूर्वम् ( २६ ) वास्तोष्पत्यमुत मन्त्रोक्तबहुदेवत्यम्। उत्तरम् (२७)

---

१. विराट् भा[१ २ ४] लं. २. सविता शाक्वरम् मूको. ३. स्वात्माविनाय मूको. ४ प्रार्थया जुहोत् भा[१ २ ५] लं; प्रार्थया जुहोति भा[३] बी. ५. चन्द्रम् बी. ६. नास्ति लं. ७. परया लं. ८. ततस्ततामहाः भा[१-३] लं बी. ९. °पदोऽतिश° भा[२] बी. १०. सूक्तेन भा[२ ३].

आग्नेयम्। आभ्यां मन्त्रोक्तदेवानभिष्टूयाऽयजत्।

'यजूंषि यज्ञे' ( २६,१ ), 'छन्दांसि यज्ञे' ( ५ ) इति द्विपदा-वार्च्युष्णिहौ। 'युनक्तु देवः' ( २ ), 'प्रैषा यज्ञे' ( ४ ), 'एयमगन्' ( ६ ) इति तिस्रः; 'सोमो युनक्तु' इति द्वे ( १०-११ ) द्विपादः[1] प्राजापत्या बृहत्यः। 'इन्द्र उक्थामदान्' ( ३ ) इति त्रिपदा विराड् गायत्री। 'भगो युनक्तु' ( ९ ) इति त्रिपाद् पिपीलिकमध्या पुरउष्णिक् इति। एता एकावसानाः। 'अश्विना ब्रह्मणा' ( १२ ) इति पराऽतिशक्वरी चतुष्पात्[2] जगतीति।

'ऊर्ध्वा अस्य' ( २७,१ ) इति बृहतीगर्भा त्रिष्टुप्। 'देवो देवेषु' ( २ ) इति द्विपदा साम्नां भुरिगनुष्टुप्। 'मध्वा यज्ञम्' ( ३ ) इति [3]द्विपदाऽऽर्ची बृहतीति[3]। 'अच्छायमेति शवसा' ( ४ ) इति द्विपात्[4] साम्नी भुरिग् बृहतीति। 'अग्निः स्रुचः' ( ५ ) इति द्विपदा साम्नी त्रिष्टुप्। 'तरी मन्द्रासु' ( ६ ) इति द्विपाद् विराण्नामगायत्री। 'द्वारो देवीः' ( ७ ) इति द्विपात् साम्नी बृहती। इमा एकावसानाः। 'उरुव्यचसा' ( ८ ) इति संस्तारपङ्क्तिः। 'दैवा[5] होतारः' ( ९ ) इति षट्पदाऽनुष्टुब्गर्भा पराऽतिजगती। 'तन्नस्तुरीपम्' इति तिस्रः ( १०-१२ ) पुर-उष्णिहः॥ ९॥

'नव प्राणान्' ( ५,२८ ) इति चतुर्दशर्चम्। अथर्वा। त्रिवृद्दे-वत्यं त्रैष्टुभम्। अनेनाऽग्न्यादीन् मन्त्रोक्तान् देवान् संप्रार्थ्य त्रिवृतमस्तौदिति।

'त्रेधा जातम्' ( ६ ) इति पञ्चपदाऽतिशक्वरी हिरण्यस्तुति-परा च। 'त्र्यायुषम्' ( ७ ), 'दिवस्त्वा पातु' इति द्वे ( ९-१० ), 'आ त्वा चृतत्तु' ( १२ ) इति ककुम्मत्यनुष्टुभः। 'ऋतुभिष्ट्वा' ( १३ ) पुरउष्णिक्।

'पुरस्ताद्युक्तः' ( ५,२९ ) इति पञ्चदशर्चं त्रैष्टुभं जातवेदसमुत

---

१. त्रिपात् पिपीलिका द्वे भा[२]. २. चतुष्पदा भा[२]. ३-३. त्रिपदार्षी बृहती बी. ४. द्विपदा भा[३]. ५. दैव्या भा[२].

मन्त्रोक्तदेवताकम्। चातनः सर्वाभिर्मन्त्रोक्तान् देवानस्तौत्।

'यथा सो अस्य' (३) इति त्रिपदा विराण्नामगायत्री। 'यदस्य हृतम्' (५) इति पुरोऽतिजगती विराड् जगती[1]। 'समाहर' इति चतस्रः (१२-१५) अनुष्टुभः। प्रथमा (१२) भुरिक्। 'एतास्ते' (१४) इति चतुष्पदा। पराबृहती ककुम्मतीति।

'आवतस्ते' (५,३०) इति सप्तदशर्चम्[2]। उन्मोचन आयुष्य-कामः। आनुष्टुभम्। अनेन मन्त्रोक्तान् देवान् प्राणावनायाऽऽयुश्चाऽस्तौत्।

प्रथमा (१) पथ्या पङ्क्तिः। 'अङ्ग भेदः' (९) इति भुरिक्‌ 'नमो यमाय' (१२) इति चतुष्पदा विराड् जगती[3]। 'प्राणेनाग्ने' (१४) इति विराट् प्रस्तारपङ्क्तिः। 'अयं लोकः' (१७) इति त्र्यवसाना षट्पदा जगतीति।

'यां ते' (५,३१) इति द्वादशर्चम्। शुक्रः। कृत्यादूषण-देवत्यमानुष्टुभम्। अनेन कृत्याप्रशमनाय कृत्यामस्तौदिति।

'यश्चकार' (११) इति बृहतीगर्भाऽनुष्टुप्। 'कृत्याकृतम्' (१२) इति पथ्या बृहतीति[4] ॥ १० ॥

इति ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां
तृतीयः पटलः समाप्तः[5] ॥

---

१. नास्ति भा[२]. २. सप्तदशम् भा[१]. ३. जगतीति भा[१].
४. पंथ्यापङ्क्तिबृहती लं. ५. नास्ति भा[१ १] लं; °माप्तः लिषितं रावल सुत जशक्र रावल शंकरीया लिषितं संवत् १८८२ ना. मा. शख गु.

## अथ

# चतुर्थं पटलम्

## अथर्ववेदे षष्ठं काण्डम्

'अथातस्तृचसूक्तकाण्डे मन्त्रर्षिच्छन्दोदेवता[1] व्याख्यास्यामः। तत्र तृचः प्रकृतिः। इतरा विकृतिरिति।

'दोषो गाय', 'इन्द्राय सोमम्' इति द्वे (६,१-२) औष्णिहे। पूर्वम् (६,१) सावित्रम्। उत्तरम् (६,२) वानस्पत्यं सौम्यम्। तृचौ[2] अथर्वाऽपश्यत्। ततो मन्त्रोक्तान्[3] देवानस्तौदिति।

पूर्वस्याऽऽद्या (६,१,१) त्रिपदा पिपीलिकमध्या साम्नी[4] जगती। तथा परे द्वे (६,१,२-३) पिपीलिकमध्ये पुरउष्णिहौ। द्वितीयस्य तिस्रः (६,२,१-३) परोष्णिहः इति ॥ १ ॥

'पातं न इन्द्रापूषणा', 'त्वष्टा मे दैव्यम्' इति द्वे (६,३-४) नानादैवते। पूर्वम् (६,३) जागतम्। तत्र प्रथमा (३,१) पथ्या बृहती। परस्य चाऽऽद्या (१) पथ्या बृहती। द्वितीया (२) संस्तारपङ्क्तिः। तृतीया (३) त्रिपदा विराड् गायत्री। द्वाभ्यामाभ्याम्[5] (६,३-४) स्वस्त्ययनकामोऽथर्वा मन्त्रोक्तदेवान्[6] आत्मगोपनायाऽभिष्टूयाऽप्रार्थयदिष्टमिति।

'उदेनमुत्तरं नय,' 'योऽस्मान्' इति द्वे (६,५-६) आनुष्टुभे। पूर्वम् (६,५) ऐन्द्राग्नम्। उत्तरम् (६,६) ब्राह्मणस्पत्यं सौम्यम्। प्रागुक्तर्षिः। पूर्वस्य प्रथमया (६,५,१) अग्निमस्तौत्। द्वितीयया (२) इन्द्रम्। परया (३) अग्निम्।

---

१-१. °क्तकाण्डम° मूको. २. तृचः भा[१] [५] बी लं. ३. मन्त्रोक्तदे° भा[१-३] [४] लं. ४. साम्नी भा[१] [५] बी. ५. द्वाभ्यां भा[१]. ६. °देवान् गोप° बी.

परस्याऽऽद्यया ( ६,६,१ ) ब्रह्मणस्पतिम् । पराभ्याम् ( २-३ ) सोमम् । 'इन्द्रेमम्' ( ६,५,२ ) इति भुरिगिति[1] ॥ २ ॥

'येन सोम' ( ६,७ ) इति सौम्यं गायत्रम् । तृतीया ( ३ ) वैश्वदेवी । प्रथमा ( १ ) निचृत् । या यद्देवत्या तया तामेवाऽस्तौदिति । उक्तर्षिः ।

'यथा वृक्षं लिबुजा', 'वाञ्छ मे' इति द्वे ( ६,८-९ ) कामात्मदैवते । पूर्वस्य तिस्रः ( ६,८,१-३ ) पथ्यापङ्क्तयः । उत्तरम् ( ६,९ ) आनुष्टुभं जमदग्निरपश्यत् । ततो द्वाभ्यामाभ्याम् ( ८-९ ) कामात्मचेतसा मन्त्रोक्तां देवतामप्रार्थयत् ।

'पृथिव्यै श्रोत्राय' ( ६,१० ) इति द्वैपदं नानादेवत्यम्[2] । प्रथमा ( १ ) आग्नेयी । द्वितीया ( २ ) वायव्या । तृतीया ( ३ ) सौर्या ।

आद्या (१) साम्नी त्रिष्टुप् । द्वितीया ( २ ) प्राजापत्या बृहती । परा ( ३ ) साम्नी[3] बृहती । इदं सूक्तं सर्वकर्मसु शन्तातिः संप्रोक्षणाद्यर्थमपश्यदिति[4] ॥ ३ ॥

'शमीमश्वत्थः' (६,११ ) इति रेतोदेवत्यमुत मन्त्रोक्तदेवत्यमानुष्टुभं प्रजापतिरपश्यत् । ततस्तान् देवानस्तौत् ।

'परि द्यामिव' (६,१२) इति तक्षकदैवतम्[5] आनुष्टुभं गरुत्मान् ।

'नमो देववधेभ्यः' ( ६, १३ ) इति मार्त्यवम्[6] आनुष्टुभम् । स्वस्त्ययनकामोऽथर्वा ॥

'अस्थिस्रंसम्' ( ६, १४ ) इति बलासदेवत्यमानुष्टुभम् । बभ्रुपिङ्गलः ।

'उत्तमो असि' ( ६,१५ ) इति वानस्पत्यमानुष्टुभम् । उद्दालकः ।

'आबयो' ( ६,१६ ) इति मन्त्रोक्तदेवत्यमुत चान्द्रमसमानुष्टुभं शौनकश्चतुर्ऋचमपश्यत् ।

---

१. भुरिक् भा[१-३ ४]. २. देवतानाम् भा[१ ३ ४]. ३. साम्नां भा[१ ५] बी. ४. °मपश्यत् भा[१-३ ५]. ५. तक्षकदेवम् बी. ६. मार्त्यम् भा[२ ३] कं बी; मात्र्व्यम् भा[१].

प्रथमा ( १ ) निचृत् त्रिपदा गायत्री। 'तौविलिके' ( ३ ) इति बृहतीगर्भा ककुम्मत्यनुष्टुप्। 'अलसाला' ( ४ ) इति त्रिपदा प्रतिष्ठा। अनेन 'हिनं देवमस्तौदिति'[१] ॥ ४ ॥

'यथेयम्' ( ६,१७ ) इति चतुर्ऋचमानुष्टुभं गर्भदृंहणदेवत्य-मथर्वाऽपश्यत्। ततो गर्भदृंहणाय मन्त्रोक्तदेवतामनेनाऽस्तौत्।

'ईर्ष्यायाः' (६,१८) इति सूक्तमीर्ष्याविनाशनदेवत्यमानुष्टुभम्।

'पुनन्तु मा' ( ६, १९ ) इति नानादेवत्यमुत[२] चान्द्रमसम्। शन्तातिः। आद्या ( १ ) अनुष्टुप्।

'अग्नेरिवास्य' ( ६,२० ) इति यक्ष्मनाशनदैवतम्[३]। भृग्वङ्गिराः। प्रथमा ( १ ) अतिजगती। द्वितीया ( २ ) ककुम्मती प्रस्तार-पङ्क्तिः। तृतीया ( ३ ) सतःपङ्क्तिरिति। अनेन मन्त्रोक्तान् सर्वान् देवानस्तौदिति[४] ॥ ५ ॥

'इमा याः' ( ६,२१ ) इति चान्द्रमसमानुष्टुभम्। 'कृष्णं नियानम्' ( ६,२२ ) इति आदित्यरश्मिदेवत्यमुत मारुतं त्रैष्टुभम्। शन्तातिरिमे[५] द्वे ( ६,२१-२२ ) सूक्ते अपश्यत्। तत आभ्यां मन्त्रोक्तदेवानस्तौत्। 'पयस्वतीः कृणुथ' ( ६,२२,२ ) इति चतुष्पदा भुरिग् जगती।

'सस्रुषीः', 'हिमवतः प्र स्रवन्ति' इति द्वे ( ६,२३-२४ ) अब्देवत्ये आनुष्टुभे। आभ्यामप एवाऽस्तौत्। 'ओता आपः' ( ६,२३,२ ) इति त्रिपदा गायत्री। 'देवस्य सवितुः' ( ६,२३,३ ) इति परोष्णि-गिति[६] ॥ ६ ॥

'पञ्च च याः' ( ६,२५ ) इति मन्त्रोक्तमन्याविनाशन-देवत्यमानुष्टुभम्। शुनःशेपः।

'अव मा पाप्मन्' ( ६,२६ ) इति पाप्मदेवताकमानुष्टुभम्। ब्रह्माऽनेन पाप्मानमस्तौत्।

---

१-१. हिनमस्तौ° बी; देवमस्तौत् भा[१-३ ५]. २. °त्यं गायत्रमुत भा[१]. ३. °नदेवतम् भा[२ ३]. ४. °नस्तौत् भा[१-३ ५]. ५. °रिति भा[१-३ ५] छं; °न्तातिः बी. ६. परोष्णिक् भा[१-३ ५].

'देवाः कपोतः', 'ऋचा कपोतम्', 'अमून् हेतिः' इति त्रीणि (६,२७-२९) सूक्तानि याम्यानि उत नैर्ऋतानि। प्रथमम् (२७) जागतम्। परम् (२८) त्रैष्टुभम्। तृतीयम् (२९) बार्हतम्। भृगुरपश्यत्। तत एतैः कपोतोलूकजन्यारिष्टक्षयकामो यमं निर्ऋतिं च मन्त्रोक्तान् देवानस्तौत्।

'शिवः कपोतः' (६,२७,२) इति त्रिष्टुप्। 'परीमेऽग्निम्' (६,२८,२) इत्यनुष्टुप्। 'यः प्रथमः' (६,२८,३) इति जगती। 'अवैरहत्याय' (६,२९,३) इति त्र्यवसाना सप्तपदा विराडष्टिः। 'अमून् हेतिः' इति द्वे (६,२९,१-२) विराण्नामगायत्र्यौ इति[1] ॥ ७॥

'देवा इमम्' (६,३०) इति शाम्यं जागतम्। 'आयं गौः' (६,३१) इति गव्यं गायत्रम्। उपरिबभ्रवो द्वे (३०,३१) अद्राक्षीत्। 'यस्ते मदोऽवकेशः' (६,३०,२) इति त्रिष्टुप्। 'बृहत्पलाशे' (६,३०,३) इति चतुष्पाच्[2] शङ्कुमत्यनुष्टुप्। |

'अन्तर्दावे', 'यस्येदमा रजो युजः', 'प्राग्नये', 'वैश्वानरो न ऊतये' इति चत्वारि (६,३२-३५) सूक्तानि। 'प्राग्नये' (६,३४) इति पञ्चर्चम्। प्रथमम् (६, ३२) त्रैष्टुभम्। उत्तराणि गायत्राणि त्रीणि (३३-३५) अग्नीन्द्रविश्वानरदेवतानि[3]।

प्रथमस्य द्वे (६,३२,१-२) तृतीयम् (६,३४) च चातनः। तृतीयाम्[4] (६,३२,३) अथर्वा। द्वितीयम् (६,३३) जाटिकायनः। तुरीयम् (६,३५) कौशिकः।

'रुद्रो वो ग्रीवा अशरैत्' (६,३२,२) इति[5] प्रस्तारपङ्क्तिः। 'नाधृष आ दधृषते' (६,३३,२) इत्यनुष्टुप् ॥ ८॥

'ऋतावानम्', 'उपप्रागात्' इति द्वे (६,३६-३७)। प्रथमम् (३६) आग्नेयं गायत्रम्। परम् (३७) चान्द्रमसमानुष्टुभम्। स्वस्त्ययनकामोऽथर्वाऽपश्यदिति।

---

१. नास्ति भा[१-३ ५]. २. चतुष्पदा भा[१]. ३. 'रदैतानि भा[१ ३]. ४. तृतीयम् भा[२ ३ ४] लं. ५. नास्ति भा[१] लं.

'सिंहे व्याघ्रे', 'यशो हविः' इति द्वे ( ६,३८-३९ )। प्रथमम् ( ६,३८ ) चतुर्ऋचं त्रैष्टुभम् । 'यशो हविः' ( ६,३९,१ ) इति जगती। परा ( २ ) त्रिष्टुप्। अन्त्या ( ३ ) अनुष्टुप्।

इमे ( ३८-३९ ) बृहस्पतिदेवत्ये वर्चस्कामः प्रागुक्तर्षिरपश्यत्। उत पूर्वम् ( ३८ ) त्विषिदेवत्यम् । ततो मन्त्रोक्तान् देवान् आभ्यामस्तौत्।

'अभयं द्यावापृथिवी' ( ६,४०,१ ), 'अस्मै ग्रामाय' ( ६,४०,२ ) इति द्वे[1] जगत्यौ मन्त्रोक्तदेवत्ये अभयकामः। 'अनमित्रं नो अधरात्' ( ६,४०,३ ) इत्यैन्द्रीमनुष्टुभं स्वस्त्ययनकामः।

'मनसे चेतसे धियै' ( ६,४१ ) इति बहुदैवतमुत[2] चान्द्रमसमानुष्टुभम्। ब्रह्मा। आद्या ( १ ) भुरिक्। 'मा नो हासिषुः' ( ३ ) इति त्रिष्टुबिति[3] ॥ ९ ॥

'अव ज्यामिव' ( ६,४२ ) इति मन्त्रोक्तमन्युदेवत्यमानुष्टुभम्। भृग्वङ्गिराः। आद्ये द्वे ( १-२ ) भुरिजौ।

'अयं दर्भः' ( ६,४३ ) इति मन्त्रोक्तमन्युशमनदेवताकमानुष्टुभम्। परस्परं चित्तैकीकरणकामः[4] इमे द्वे ( ६,४२-४३ ) सूक्ते अपश्यत्। द्वाभ्यां मन्त्रोक्ते अस्तौत्।

'अस्थाद् द्यौः' ( ६,४४ ) इति विश्वामित्रः। मन्त्रोक्तदेवत्यमुत वानस्पत्यमानुष्टुभम्। 'रुद्रस्य मूत्रम्' ( ३ ) इति त्रिपदा महाबृहती।

'परोऽपेहि' ( ६,४५ ) इति दुःस्वप्ननाशनदेवत्यम्। आङ्गिरसः प्रचेता यमश्च। आद्या ( १ ) पथ्या पङ्क्तिः। 'अवशसा' ( २ ) इति भुरिक् त्रिष्टुप्। 'यदिन्द्र' ( ३ ) इत्यनुष्टुप्।

'यो न जीवः' ( ६,४६ ) इति तथर्षिः। पूर्वोक्तदेवत्यमुत स्वाप्नम्। आभ्याम् ( ६,४५-४६ ) मन्त्रोक्तदेवानस्तौदिति[5] ॥ १० ॥

---

१. नास्ति भा[१ २ ४] बी लं. २. °दैवतं भा[१] बी लं. ३. त्रिष्टुप् भा[१]. ४. °चित्तैकीकरणः भा[१-३] ह्वि. ५. °नस्तौत् भा[१-३ ५].

'यो न जीवः' (१) इति ककुम्मती[1] विष्टारपङ्क्तिः। 'विद्म ते' (२) इति त्र्यवसाना शक्करीगर्भा पञ्चपदा जगती। 'यथा कलाम्' (३) इत्यनुष्टुप्।

'अग्निः प्रातःसवने[2] इति [2]प्रथमा (६,४७,१) आग्नेयी[2]। त्रैष्टुभम्। द्वितीया (२) वैश्वदेवी। तृतीया (३) सौधन्वना। प्रथमया प्रथमे सवनेऽग्निमस्तौत्। द्वितीयया माध्यन्दिने विश्वान् देवान्। तृतीयया सौधन्वनानिति।

'श्येनोऽसि' (६ ४८) इति [3]उक्तर्षिः। मन्त्रोक्तदेवत्यम्[3] औष्णिह-मिति। तिस्रः। सप्तर्षयोऽनेन[4] स्तूयन्ते।

'नहि ते अग्ने' (६,४९) इत्याग्नेयम्। गार्ग्यः। आद्या (१) अनुष्टुप्। 'मेष इव' इति द्वे (२-३) जगत्यौ। परा (३) विराट् तत्रेति॥ ११॥

'हतं तर्दम्' (६,५०) इत्यथर्वाऽऽश्विनमभयकामः। प्रथमा (१) विराड् जगती। 'तर्द है', 'तर्दापते' इति द्वे (२-३) पथ्यापङ्क्ती।

'वायोः पूतः' (६,५१) इति शन्तातिः। आप्यं त्रैष्टुभम्। आद्या (१) गायत्री। 'यत् किञ्च' (३) इति वारुणी जगती। तया[5] वरुणस्तुतिः।

'उत् सूर्यः' (६,५२) इति भागलिः। मन्त्रोक्तबहुदेवत्यमा-नुष्टुभम्।

'द्यौश्च मे' (६,५३) इति नानादैवतं त्रैष्टुभम्। बृहच्छुक्रः। प्रथमा (१) जगतीति। अनेन मन्त्रोक्तान् देवानभिष्टूयाऽप्रार्थयदिति।

'इदं तत्' (६,५४) इति ब्रह्मा। अग्नीषोमीयमानुष्टुभम्।

'ये पन्थानः' (६,५५,१) इति वैश्वदेवी जगती। 'ग्रीष्मो हेमन्तः' इति द्वे (२-३) रौद्र्यौ। पूर्वा (२) त्रिष्टुप्।

---

१. नास्ति लं. २-२. प्रथमे श्रवसे आग्नेयम् मूको. ३-३. मन्त्रो-क्तर्षिदेव° मूको. ४. तु. साभा. कौसू (५६,२). ५. तथा भा[२][५].

‘इदावत्सराय’ ( ३ ) इति जगतीति। अनेन मन्त्रोक्तदेवतास्तुतिरिति[१] ॥ १२ ॥

‘मा नः’[२] ( ६,५६,१ ) इति वैश्वदेवी[३]। उष्णिग्गर्भा पथ्या पङ्क्तिः। ‘नमोऽस्त्वसिताय’ इति द्वे ( २-३ ) रौद्र्यौ। पूर्वा ( २ ) अनुष्टुप्[४]। ‘सं ते हन्मि’ ( ३ ) इति निचृत्।

‘इदमिद् वा’ इति द्वे ( ६,५७,१-२ ) रौद्र्यौ। ‘शं च नः’ ( ६,५७,३ ) इति शन्तातिः। पूर्वे द्वे ( १-२ ) अनुष्टुभौ। तृतीया ( ३ ) पथ्या बृहती।

‘यशसं मेन्द्रः’ ( ६,५८ ) इत्यथर्वा यशस्कामः। बार्हस्पत्यमुत मन्त्रोक्तदेवत्यम्। आद्या ( १ ) जगती। ‘यथेन्द्रः’ ( २ ) इति प्रस्तारपङ्क्तिः। ‘यशा इन्द्रः’ ( ३ ) इत्यनुष्टुप्।

‘अनड्वद्भ्यस्त्वम्’ ( ६,५९ ) इति रौद्रमुत मन्त्रोक्तदेवत्यमानुष्टुभम्।

‘अयमा यात्यर्यमा’ ( ६,६० ) इत्यार्यमणमानुष्टुभम्।

‘मह्यमापः’ ( ६,६१ ) इति रौद्रं त्रैष्टुभम्। ‘अहं विवेच’ इति द्वे ( २-३ ) भुरिजौ।

‘वैश्वानरो रश्मिभिः’ ( ६,६२ ) इति रौद्रमुत मन्त्रोक्तदेवत्यं त्रैष्टुभमिति[५] ॥ १३ ॥

‘यत्ते देवी’ ( ६,६३ ) इति चतुर्ऋचम्। द्रुह्वणः। नैर्ऋतं मार्त्यवं[६] जागतम्। तिसृभिः ( १-३ ) आद्याभिरायुर्वर्चोबलकामो निर्ऋतिं यमं मृत्युमस्तौत्। अन्त्या[७] ( ४ ) अनुष्टुप्। तयाऽग्निं वसून्यप्रार्थयदिति। पूर्वा ( १ ) अतिजगतीगर्भा।

‘सं जानीध्वम्’ ( ६,६४ ) इत्यथर्वा सांमनस्यं वैश्वदेवमा-

---

१. स्तुतिः भा[१-३ ४]. २ नः देवाः भा[१-३]. ३. वैश्वदेवीति भा[१ २] लं. ४. त्रिष्टुप् लं. ५. त्रैष्टुभम् भा[१-३ ५]. ६. मर्त्यं मूको. ७. नास्ति गु.

नुष्टुभम् । [1]द्वितीया त्रिष्टुप्[1] ।

'अव मन्युः', 'निर्हस्तः', 'परिवर्त्मानि' इति त्रीणि (६,६५-६७) चान्द्राण्युतैन्द्राणि[2] । पूर्वम् (६५) उत पाराशर्यम् । आनुष्टुभानि । पूर्वस्याऽऽद्या (६५,१) पथ्या पङ्क्तिः । 'निर्हस्तः शत्रुः' (६६,१) इति त्रिष्टुप् ।

'आयमगन्' (६,६८) इति मन्त्रोक्तदेवत्यम् । आद्या (१) पुरोविराडतिशाक्करगर्भा[3] चतुष्पदा जगती । द्वितीया (२) अनुष्टुप् । 'येनावपत्' (३) इत्यतिजगतीगर्भा त्रिष्टुप् ।

'गिरावरगराटेषु' (६,६९) इति बार्हस्पत्यमुताऽऽश्विनमानुष्टुभम् । वर्चस्कामो यशस्कामश्च ।

'यथा मांसम्' (६,७०) इति काङ्कायनः । आघ्न्यं जागतम् ।

'यदन्नमद्मि' (६,७१) इति ब्रह्मा । आग्नेयं जागतम् । अन्त्या (३) वैश्वदेवी त्रिष्टुप् ।

'यथासितः' (६,७२) इत्यथर्वाऽङ्गिराः शेपोऽर्कदेवत्यमानुष्टुभम् । आद्या (१) जगती । अन्त्या (३) भुरिक् चेति ॥ १४ ॥

'एह यातु', 'सं वः पृच्यन्ताम्' इति द्वे (६,७३-७४) सांमनस्ये मन्त्रोक्तनानादेवत्ये च । पूर्वम् (७३) त्रैष्टुभम् । उत्तरम् (७४) आनुष्टुभम् । अथर्वा ।

आद्यस्याऽऽद्यातृतीये (७३,१;३) भुरिजौ । परस्याऽन्त्या (७४,३) त्रिष्टुप् त्रिणामदेवत्या । तया त्रिणामानं सांमनस्यमप्रार्थयत् ।

'निरमुं नुदे' (६,७५) इति मन्त्रोक्तदेवत्यमैन्द्रमानुष्टुभम् ।

---

१-१. नास्ति मूको तु ह्रि. २. चान्द्रमसमुतै° भा[5] बी लं. ३. °डतिशकरीग° ह्रि.

सपत्नक्षयकामः कबन्धः। 'एतु तिस्रः' ( ३ ) इति षट्पदा जगती।

'य एनम्' ( ६,७६ ) इति सान्तपनाग्नेयमानुष्टुभं चतुर्ऋचम्। 'यो अस्य' ( ३ ) इति ककुम्मती।

'अस्थाद् द्यौः' ( ६,७७ ) इति जातवेदसमानुष्टुभम्।

'तेन भूतेन' इति द्वे ( ६,७८,१-२ ) चान्द्रमस्यौ। तृतीया ( ३ ) त्वाष्ट्रीति[1]। तिस्रोऽनुष्टुभः। अथर्वा प्रथमाभ्यां ( १-२ ) जायाभिवृद्ध्यै चन्द्रमसमस्तौत्[2]। रयिं च दम्पत्योरप्रार्थयत्। अन्त्यया ( ३ ) त्वष्टारं दीर्घायूंषि चेति ॥ १५ ॥

'अयं नः' ( ६,७९ ) इति संस्फानदेवत्यं गायत्रम्। अन्त्या ( ३ ) त्रिपदा प्राजापत्या जगती।

'अन्तरिक्षेण पतति' ( ६,८० ) इति मन्त्रोक्तचन्द्रमसम्[3] आनुष्टुभम्। प्रथमा ( १ ) भुरिक्। 'अप्सु ते' ( ३ ) इति प्रस्तारपङ्क्तिः।

'यन्तासि' (६,८१) इति मन्त्रोक्तदेवत्यमुताऽऽदित्यम् आनुष्टुभम्।

[4]'आगच्छतः' (६,८२) इत्यैन्द्रमानुष्टुभम्[4]। जायाकामो भगः।

'अपचितः प्र पतत' ( ६,८३ ) इति चतुर्ऋचमानुष्टुभं मन्त्रोक्तदेवत्यम्। अङ्गिराः[5]। 'वीहि स्वाम्' ( ४ ) इत्येकावसाना द्विपदा निचृदार्च्यनुष्टुप्।

'यस्यास्ते' ( ६,८४ ) इति चतुर्ऋचं नैर्ऋतम्। आद्या ( १ ) भुरिग्जगती। 'भूते हविष्मती' ( २ ) इति त्रिपदार्ची[6] बृहती। 'एवो ष्वस्मन्' इति द्वे ( ३-४ ) जगत्यौ। तत्र द्वितीया ( ४ ) भुरिक् त्रिष्टुबिति[7] ॥ १६ ॥

---

१. त्वाष्ट्री भा[२] बी. २. चान्द्रम° भा[१]. ३. चान्द्रम° भा[१-३] लं. ४-४. नास्ति भा[१]. ५. नास्ति लं. ६. °दार्षी भा[२,५] बी. ७. त्रिष्टुप् भा[१,३].

'वरणो वारयातै' ( ६,८५ ) इति वानस्पत्यमानुष्टुभम्। अथर्वा यक्ष्मनाशनकामः[1]।

'वृषेन्द्रस्य' ( ६,८६ ) इति चैकवृषदेवत्यमानुष्टुभम्। वृषकामः।

'आ त्वाहार्षम्', 'ध्रुवा द्यौः' इति द्वे ( ६,८७-८८ ) ध्रौव्ये आनुष्टुभे। 'ध्रुवोऽच्युतः' ( ८८,३ ) इति [2]त्रिष्टुप्।

'इदं यत् प्रेण्यः' ( ६,८९ ) इति मन्त्रोक्तदैवतं रौद्रम्। आनुष्टुभं मन्युविनाशनम्।

'यां ते रुद्रः' ( ६,९० ) इति[2] रौद्रम्। द्वे ( १-२ ) आनुष्टुभे। 'नमस्ते' ( ३ ) इत्यार्षी भुरिग् उष्णिक्।

'इमं यवम्' ( ६,९१ ) इति मन्त्रोक्तयक्ष्मनाशनदेवत्यमानुष्टुभम्। भृग्वङ्गिराः। अन्त्यया ( ३ ) अप अस्तौदिति ॥ १७ ॥

'वातरंहा भव' ( ६,९२ ) इति वाजिनं त्रैष्टुभम्। आद्या ( १ ) जगती। अथर्वाऽनेनेन्द्राय वाजिनमस्तौत्।

'यमो मृत्युः' ( ६,९३ ) इति रौद्रम्। अन्त्या ( ३ ) बहुदेवत्या। त्रैष्टुभम्। शन्तातिः। बहून् विश्वान् देवान् मन्त्रोक्तान्।

'सं वो मनांसि' ( ६,९४ ) इति सारस्वतमानुष्टुभम्[3]। अथर्वाऽङ्गिराः। द्वितीया[4] ( २ ) विराड् जगती।

'अश्वत्थो देवसदनः' ( ६,९५ ) इति वानस्पत्यमानुष्टुभं मन्त्रोक्तदेवत्यम्। भृग्वङ्गिराः।

'या ओषधयः' ( ६,९६ ) इति च वानस्पत्यमानुष्टुभम्। अन्त्या ( ३ ) सौम्या। त्रिपाद्विराण्नामगायत्रीति[5] ॥ १८ ॥

---

१. °नाशन इति कामः भा[२] [५]. २-२. नास्ति ळं. † आनुष्टुभे मूको. ३. सारस्वत्यमा° मूको. ४. अन्त्या मूको. ५. °यत्री भा[१].

'अभिभूर्यज्ञः', 'इन्द्रो जयाति', 'अभि त्वेन्द्र' इति त्रीणि (६,९७-९९)। पूर्वम् (९७) मैत्रावरुणम्। परे द्वे (९८-९९) ऐन्द्रे। पूर्वे द्वे (९७-९८) त्रैष्टुभे। तृतीयम् (९९) आनुष्टुभम्। अथर्वा। 'अभिभूर्यज्ञः' इति प्रथमान्त्याभ्याम् (६,९७,१;३) देवानस्तौत्। द्वितीयया[1] (९७,२) मित्रावरुणौ। पराभ्याम् (९८,९९) सूक्ताभ्यामिन्द्रम्।

'स्वधास्तु' (९७,२) इति जगती। 'इमं वीरम्' (९७,३) इति भुरिक्। 'त्वमिन्द्र' (९८,२) इति बृहतीगर्भाऽऽस्तारपङ्क्तिः। 'परि दद्मः' (९९,३) इति भुरिग् बृहती। सौम्या सावित्री च[2]।

'देवाः अदुः' (६,१००) इति गरुत्मान्। वानस्पत्यमानुष्टुभम्। अनेन विषोपशान्तये मन्त्रोक्तां देवतामासुरीदुहितरमस्तौदिति ॥ १९ ॥

'आ वृषायस्व' (६,१०१) इति ब्राह्मणस्पत्यमानुष्टुभम्। अथर्वाऽङ्गिराः शेपःप्रथनकामः।

'यथायं वाहः' (६,१०२) इत्याश्विनमानुष्टुभम्। जमदग्निरभिसंमनस्कामः।

'संदानं वः', 'आदानेन' इति द्वे (६,१०३-१०४) बहुदेवत्ये उतैन्द्राग्ने। आनुष्टुभे। सूक्तमादुच्छोचनप्रशोचनावपश्यताम्[3]।

'यथा मनः' (६,१०५) इति कासादेवत्यमानुष्टुभम्।

'आयने ते' (६,१०६) इति दूर्वाशालादेवत्यमानुष्टुभम्। उन्मोचनप्रमोचनाविति[1] ॥ २० ॥

'विश्वजित्त्रायमाणायै' (६,१०७) इति चतुर्ऋचं विश्वजिद्देवत्यमानुष्टुभम्। शन्तातिरनेन मन्त्रोक्तां देवतामस्तौत्।

'त्वं नो मेधे' (६,१०८) इति पञ्चर्चं मेधादेवत्यमानुष्टुभम्

---

१. तृतीयया भा[१-३] [५] लं गु. २. नास्ति भा[१] [३] बी. ३. °नप्रशोच° भा[५].

शौनकोऽनेन मेधामस्तौत्। 'यामृषयः' ( ४ ) इत्याग्नेयी। 'मेधामहम्' ( २ ) इत्युरोबृहती। 'यां मेधाम्' ( ३ ) इति पथ्या बृहती।

'पिप्पली' ( ६,१०९ ) इति मन्त्रोक्तपिप्पलीदेवत्यमुत भैषज्यायुरानुष्टुभम्। अथर्वा पिप्पलीमस्तौदिति।

'प्रत्नो हि' ( ६,११० ) इत्याग्नेयं त्रैष्टुभम्। प्रथमा ( १ ) पङ्क्तिः। अनेनाऽग्निमस्तौदिति।

'इमं मे अग्ने' ( ६, १११ ) इत्याग्नेयमानुष्टुभं चतुर्ऋचम्। प्रथमा ( १ ) परानुष्टुप् त्रिष्टुप्[1]।

'मा ज्येष्ठम्', 'त्रिते देवाः' इति द्वे ( ६,११२-११३ ) त्रैष्टुभे। प्रथमम् ( ११२ ) आग्नेयम्। उत्तरम् ( ११३ ) पौष्णम्। 'द्वादशधा' ( ११३,३ ) इति पङ्क्तिः।

'यद्देवा देवहेडनम्', 'यद् विद्वांसः' इति द्वे[2] ( ६,११४-११५ ) वैश्वदेवे आनुष्टुभे। ब्रह्माऽऽभ्यां मन्त्रोक्तान् विश्वान् देवान्।

'यद् यामम्' ( ६,११६ ) इति विवस्वद्देवत्यं जागतम्। जाटिकायनः। द्वितीया ( २ ) त्रिष्टुप्।

'अपमित्यमप्रतीत्तम्' इति त्रीणि ( ६,११७-११९ ) आग्नेयानि त्रैष्टुभानि च। अनृणकामः कौशिक एभिर्वैश्वानरम्।

'यदन्तरिक्षम्' इति द्वे ( ६,१२०-१२१ ) मन्त्रोक्तदेवत्ये। प्रथमस्याऽऽद्या ( १२०,१ ) जगती। 'भूमिर्माता' (१२०,२) इति पङ्क्तिः। 'यत्रा सुहार्दः' इति तिस्रः ( १२०,३;१२१,१-२ ) त्रिष्टुभः। 'उदगाताम्' इति द्वे ( १२१,३-४ ) अनुष्टुभाविति ॥ २१ ॥

'एतं भागम्', 'एतं सधस्थाः' इति द्वे ( ६,१२२-१२३ ) पञ्चर्चे त्रैष्टुभे। पूर्वम् ( १२२ ) वैश्वकर्मणम्। परम्[3] ( १२३ ) वैश्वदेवम्। भृगुर्मन्त्रोक्तान् देवानस्तौदिति।

---

१. नास्ति भा[२] लं बी. २. द्वे त्रैष्टुभे भा[१] [२]. ३. नास्ति भा[१] लं.

'यज्ञं यन्तम्' ( ६,१२२,४ ), 'शुद्धाः पूताः' ( १२२,५ ) इति जगत्यौ । 'देवाः पितरः' ( १२३,३ ) इति द्विपात् साम्न्यनुष्टुप् । 'स पचामि' ( १२३,४ ) इत्येकावसाना द्विपात् प्राजापत्या भुरिगनुष्टुप् ।

'दिवो नु माम्' ( ६,१२४ ) इति त्रैष्टुभं मन्त्रोक्तदेवत्यमुत दिव्याप्यम् । निर्ऋत्यपतरणकामः[1] अथर्वा ।

'वनस्पते वीड्वङ्गः' ( ६,१२५ ) इति त्रैष्टुभं वानस्पत्यम् । 'दिवस्पृथिव्याः' ( २ ) इति जगती ।

'उप श्वासय' ( ६,१२६ ) इति वानस्पत्यं दुन्दुभिदेवत्यं भुरिक् त्रैष्टुभम् । आभ्याम् ( ६,१२५-१२६ ) युद्धोपकरणानि । 'प्रामूम्' ( १२६,३ ) इति [2]पुरोबृहतीविराड्गर्भा त्रिष्टुप्[2] ॥ २२ ॥

'विद्रधस्य' (६,१२७) इति भृग्वङ्गिराश्चाऽस्तौत् । वानस्पत्यमुत यक्ष्मनाशनदेवत्यमानुष्टुभम् । 'यो अङ्ग्यः' ( ३ ) इति त्र्यवसाना षट्पदा जगती ।

'शकधूमम्' ( ६,१२८ ) इति चतुर्ऋचम् अथर्वाङ्गिराः । सौम्यं शकधूमदेवत्यमानुष्टुभम् । अनेन नक्षत्रराजानं चन्द्रमसमस्तौदिति ।

'भगेन मा' (६,१२९) इति भगदेवत्यम् [3]आनुष्टुभम् । अथर्वा† । अनेन भगमस्तौत्‡[3] ।

'रथजिताम्' ( ६,१३० ) इति चतुर्ऋचम् । 'नि शीर्षतः' (६,१३१) इति प्रागुक्तम् । 'यं देवाः' ( ६,१३२ ) इति पञ्चर्चम् । इमानि स्मरदेवताकानि त्रीणि ( १३०-१३२ ) आनुष्टुभानि ।

'रथजिताम्' ( १३०, १ ) इति विराद् पुरस्ताद्बृहती । 'यं देवाः' ( १३२,१ ) इति त्रिपादनुष्टुप्[4] ।

---

१. °त्यपसरण° लं; °त्यपस्तरण° भा[१-३ ५] बी. २-२. नास्ति भा[१-३ ५] बी. ३-३. नास्ति भा[२]. † नास्ति लं. ‡ भगमेवास्तौत् लं. ४. त्रिपदानु° भा[१].

[1]'यमिन्द्राणी' ( १३२, ३ ) इति भुरिक्। 'यं विश्वे देवाः'[1] ( १३२,२ ), 'यमिन्द्राग्नी' ( १३२,४ ), 'यं मित्रावरुणौ' ( १३२,५ ) इति [2]तिस्रस्त्रिपादो महाबृहत्यः। पूर्वे द्वे ( १३२,२;४ ) विराजौ[2] ॥ २३ ॥

'य इमाम्' (६,१३३) इति पञ्चर्चम्। अगस्त्यः। मेखलादेवताकं त्रैष्टुभम्[3]। अनेन मेखलामभिष्टूय तां ब्रह्मचारिणमन्त्याभ्याम्[4] ( ४-५ ) बध्वा चाऽप्रार्थयत्।

'आहुतासि' ( २ ), 'यां त्वा' ( ५ ) इत्यनुष्टुभौ। 'य इमाम्' ( १ ) इति भुरिक्। 'श्रद्धाया दुहिता' ( ४ ) इति जगती[5]।

'अयं वज्रः' इति द्वे ( ६,१३४-१३५ ) सूक्ते[6] मन्त्रोक्तवज्रदेवत्ये[7] आनुष्टुभे। शुक्रः। 'प्रथमस्य द्वितीया' ( १३४,२ ) भुरिक् त्रिपदा गायत्री। प्रथमा ( १३४,१ ) पराऽनुष्टुप् त्रिष्टुप्। अनेन मन्त्रोक्तमभिमन्त्र्याऽभिष्टूय तद्प्रैषीत् 'यदश्नामि' ( १३५, १-३ ) इति मन्त्रैरिति ॥ २४ ॥

'देवी देव्याम्' इति त्रीणि ( ६, १३६-१३८ ) आनुष्टुभानि वानस्पत्यानि। तृतीयं ( १३८ ) पञ्चर्चमथर्वा। पूर्वे द्वे ( १३६-१३७ ) केशवर्धनकामो वीतहव्यः। तृतीयं क्लीबं कर्तुकामः इति। तत एभिर्नितत्नीमोषधिमस्तौदिति[9]।

'दृंह प्रत्नान्'[10] ( १३६,२ ) इत्येकावसाना द्विपात् साम्नी[11] बृहती। 'क्लीव क्लीवम्' ( १३८,३ ) इति पथ्या पङ्क्तिः।

'न्यस्तिका रुरोहिथ' इति द्वे ( ६,१३९-१४० ) आनुष्टुभे (?) पूर्वम् ( १३९ ) पञ्चर्चं वानस्पत्यम्। द्वितीयम् ( १४० ) ब्राह्मणस्पत्यमुत मन्त्रोक्तदन्तदेवत्यम्।

---

१-१. नास्ति भा$^{2}$. २-२. तिस्र एता बृहत्यः इति भा$^{1-3}$ बी. ३. नास्ति भा$^{1,3}$ बी. ४. °न्त्याभ्यां द्वाभ्याम् भा$^{1,3}$; °न्त्याभ्यां मृत्योरहम्- (६,१३३,३) इति त्रैष्टुभम् भा$^{1-3}$ बी. ५. जगतीति भा$^{1,3,5}$. ६. मंशे लं; त्रैष्टुभे भा$^{1-3,5}$ बी. ७. वज्रदेवत्ये लं. ८-८. अन्त्या मूको. ९. °निलनिमो° मूको. १०. प्रत्नाम् भा$^{5}$ लं. ११. साम्नां लं.

'न्यस्तिका' (१३९,१) इति त्र्यवसाना षट्पदा विराड् जगती। 'यौ व्याघ्रौ' (१४०,१) इति उरोबृहती। 'व्रीहिमत्तम्' (१४०,२) इत्युपरिष्टाज्ज्योतिष्मती त्रिष्टुप्। 'उपहूतौ सयुजौ' (१४०,३) इत्यास्तारपङ्क्तिः।

'वायुरेनाः' इति द्वे (६,१४१-१४२) आनुष्टुभे। पूर्वम् (१४१) आश्विनम्। उत्तरम् (१४२) वायव्यम्। विश्वामित्र इति ॥ २५ ॥

इति ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां

चतुर्थः पटलः समाप्तः[1] ॥

---

१. नास्ति भा[२] [३] लं; 'माप्तः रा॰ राखेश्वर सुत रा॰ बवल सु॰ जेशंकर तथा शंकरीया लिखित श्रीराजा सत्य छ जी संवत् १८२७ आश्वन वदी शुक्रवार श्रीराम गु.

अथ

# पञ्चमं पटलम्

## अथर्ववेदे सप्तमं काण्डम्

**अथैकर्चसूक्तकाण्डमन्त्राणामृषिदैवतच्छन्दांसि वक्ष्यामः।**

'धीती वा ये' (७,१) इति द्व्यृचम्। एतत्प्रभृतीनि त्रैष्टुभानि अष्टसूक्तानि (७,१-८)। पूर्वाणि त्रीणि (७,१-३) आत्मदेवत्यानि। चतुर्थम् (७,४) वायव्यम्। पञ्चमम्[1] (७,५) पञ्चर्चमात्मदेवताकम्। षष्ठम् (७,६) द्व्यृचम्। तथा पराणि[2] त्रीणि (७,६-८) इमान्यदितिदेवत्यानि। ब्रह्मवर्चसकामोऽथर्वा मन्त्रोक्तान् देवानस्तौदिति।

'महीमू षु' (७,६,२) इति भुरिक्। 'स वेद पुत्रः' (७,१,२), 'सुत्रामाणम्' (७,७,१), 'वाजस्य नु' (७,७,२), 'दितेः पुत्राणाम्' (७,८,१) इति जगत्यः। तत्र पूर्वास्तिस्रः (७,१,२; ७,७,१-२) विराजः। अन्त्या (७,८,१) आर्षीति। 'यद् देवाः' (७,५,३) इति पङ्क्तिः। 'यत् पुरुषेण' (७,५,४) इत्यनुष्टुप्।

'भद्रादधि' इति द्वे (७,९-१०) त्रैष्टुभे। पूर्वम् (७,९) बार्हस्पत्यम्। द्वितीयम् (७,१०) चतुर्ऋचं पौष्णम्। उपरिबभ्रवः। मन्त्रोक्तदेवे[3]। 'पूषन् तव' (७,१०,३) इति त्रिपदाऽऽर्षी गायत्री। 'परि पूषा' (७,१०,४) इति अनुष्टुबिति[4] ॥ १ ॥

'यस्ते स्तनः' इति द्वे (७,११-१२) त्रैष्टुभे सारस्वते। 'सभा च मा' (७,१३) इति चतुर्ऋचं सभ्यमानुष्टुभम्। शौनकः। पूर्वाभ्याम् (७,११-१२) सरस्वतीम्। तृतीयस्य पूर्वा (७,१३,१)

---

१. नास्ति भा[५] लं बी. २. परं मूको. ३. °देवौ भा[१ ३ ६] बी लं; °देवः भा[५]. ४. अनुष्टुप् भा[१ ३ ५] लं.

द्विदेवत्योत पित्र्या, भुरिक् त्रिष्टुप्। द्वितीया (७,१३,२) सभ्या। तृतीया (७,१३,३) ऐन्द्री। चतुर्थ्या (७,१३,४) मन्त्रोक्तदेवत्यया[1] तामप्रार्थयत्।

'यथा सूर्यः' (७,१४) इति द्व्यृचमानुष्टुभं सौर्यम्[2]। अथर्वा द्विषो वर्चो हर्तुकामः। तत एनमप्रार्थयत्।

'अभि त्यं देवम्' (७,१५) इति चतुर्ऋचं सावित्रमानुष्टुभम्। 'तां सवितः' इति द्वे (७,१६-१७) सावित्रे त्रैष्टुभे। भृगुः। मन्त्रोक्ता देवताः। 'सावीर्हि देव' (७,१५,३) इति त्रिष्टुप्। 'दमूना देवः' (७,१५,४) इति जगती।

'धाता दधातु' (७,१८) इति चतुर्ऋचमानुष्टुभं सावित्रमुत बहुदेवत्यम्। पूर्वा (१) त्रिपदाऽऽर्षी गायत्री। 'धाता विश्वा' इति द्वे (३-४) त्रिष्टुभाविति[3] ॥ २ ॥

'प्र नभस्व' (७,१९) इति द्व्यृचं पार्जन्यमुत पार्थिवम्। अथर्वा। पूर्वा चतुष्पाद् भुरिग् उष्णिक्। उत्तरा त्रिष्टुप्।

'प्रजापतिर्जनयति' (७,२०) इति मन्त्रोक्तदेवत्यं जागतं ब्रह्मा।

'अन्वद्य नः' (७,२१) इति षड्ऋचम्[4] आनुष्टुभमानुमतीयम्। अनेनाऽनुमतिमिति। 'अनु मन्यताम्' (३) इति त्रिष्टुप्। 'यत् ते नाम' (४) इति भुरिक्। 'एमं यज्ञम्' इति द्वे (५-६) जगत्यौ। तत्र द्वितीया (६) अतिशाक्वरगर्भा।

'समेत' (७,२२) इति मन्त्रोक्तात्मदेवत्यम्। पराशक्करी विराड्गर्भा जगती च।

'अयं सहस्रम्' (७,२३) इति द्व्यृचं लिङ्गोक्तदेवत्यम्। पूर्वा (१) द्विपदैकावसाना विराड् गायत्री। 'ब्रध्नः समीचीः' (२) इति त्रिपादनुष्टुप्।

---

१. मन्त्रोक्तदेवत्यतया भा[3] बी २. सौम्यम् भा[1]. ३ त्रिष्टुभौ भा[1, 3, 5] लं. ४. षडर्चम् भा[2] लं.

'दौष्वप्न्यम्' ( ७,२४ ) इति मन्त्रोक्तदुःष्वप्ननाशनदेवत्यमानुष्टुभम् । यमः ।

'यन्नः' ( ७,२५ ) इति सावित्रं त्रैष्टुभम् । ब्रह्मा[1] ।

'ययोरोजसा' ( ७,२६ ) इति द्व्यृचम् । 'विष्णोर्नु कम्' ( ७,२७ ) इत्यष्टर्चम् । मेधातिथिः । उभे त्रैष्टुभे वैष्णव्ये इति । सर्वैरेतैर्विष्णुमभ्यस्तौत् ।

'प्र तद्विष्णुः' ( ७,२७,२ ) इति त्रिपदा विराड् गायत्री । 'यस्योरुषु' ( ३ ) इति त्र्यवसाना षट्पदा विराट् शक्वरी । 'इदं विष्णुः' इति [2]चतस्रः ( ४-७ ) गायत्र्यः । 'दिवो विष्णो' ( ८ ) इति त्रिष्टुबिति[2] ॥ ३ ॥

'इडैवास्मान्' ( ७,२८ ) इति मन्त्रोक्तेडादेवत्यं त्रैष्टुभम् ।

'वेदः स्वस्तिः' ( ७,२९ ) इति वेददेवताकं त्रैष्टुभम् ।

'अग्नाविष्णू' ( ७,३० ) इति द्व्यृचं मन्त्रोक्तदैवतं त्रैष्टुभम् ।

'स्वाक्तं मे' ( ७,३१ ) इति द्यावापृथिवीयमुत प्रतिपादोक्तदेवताकं बार्हतम् । भृग्वङ्गिराः ।

'इन्द्रोतिभिः' ( ७,३२ ) इत्यैन्द्रम् । भुरिक् त्रिष्टुप् ।

'उप प्रियम्' ( ७,३३ ) इत्यायुष्यमानुष्टुभम् । ब्रह्मा ।

'सं मा सिञ्चन्तु' ( ७,३४ ) इति मन्त्रोक्तदेवत्यम् । पथ्या पङ्क्तिः । अनया मरुदादीन् [3]देवान् प्रजादीनप्रार्थयत्[3] ।

'अग्ने जातान्' इति द्वे ( ७,३५-३६ ) अथर्वा । जातवेदसे । द्वितीयम् ( ३६ ) तृचम् । पूर्वम् ( ३५ ) जागतम् । परम् ( ३६ ) आनुष्टुभम् । 'परं योनेः' ( ७,३६,३ ) इति त्रिष्टुप् । आभ्याम् ( ३५-३६ ) जातवेदसमिति ॥ ४ ॥

---

१. ब्रह्मात्मा बी. २-२. पञ्च गायत्र्योऽन्त्यां त्रिष्टुप् भा[1]; पञ्च गायत्र्य इति त्रिष्टुप् लं. ३-३. देवानप्रा° लं.

'अक्ष्यौ नौ' (७,३७) इति मन्त्रोक्ताक्षिदेवत्यमानुष्टुभम्।

'अभि त्वा' (७,३८) इति लिङ्गोक्तदेवत्यमानुष्टुभम्।

'इदं खनामि' (७,३९) इति पञ्चर्चं वानस्पत्यमानुष्टुभम्। अनेनाऽऽसुरीमोषधिमिति। 'प्रतीची सोमम्' (३) इति चतुष्पादुष्णिक्।

'दिव्यं सुपर्णम्' (७,४०) इति मन्त्रोक्तदेवत्यं त्रैष्टुभम्। प्रस्कण्वः।

'यस्य व्रतम्' (७,४१) इति द्व्यृचं सारस्वतं त्रैष्टुभम्। प्रथमा (१) भुरिक्।

'अति धन्वानि' (७,४२) इति द्व्यृचं श्येनदैवतम्। पूर्वा (१) जगती। परा (२) त्रिष्टुप्।

'सोमारुद्रा वि वृहतम्' (७,४३) इति द्व्यृचं मन्त्रोक्तदेवत्यं त्रैष्टुभम्।

'शिवास्ते' (७,४४) इति वाग्देवत्यं त्रैष्टुभम्।

'उभा जिग्यथुः' (७,४५) इति मन्त्रोक्तदेवत्यम्। भुरिक् त्रिष्टुप्।

'जनाद् विश्वजनीनात्' (७,४६) इति भैषज्यमानुष्टुभम्। एतैः सप्तभिः (७,४०-४६) सूक्तैर्मन्त्रोक्ताः स्वाः स्वा देवता इति॥ ५॥

'अग्नेरिवास्य' (७,४७) इति मन्त्रोक्तदेवत्यमीर्ष्यापनयनम्[1] आनुष्टुभम्।

'सिनीवालि पृथुष्टुके' (७,४८) इति तृचम्। अथर्वा। मन्त्रोक्तदेवत्यमानुष्टुभम्। 'या विश्पत्नी' (३) इति त्रिष्टुप्।

'कुहूं देवीम्' (७,४९) इति द्व्यृचं मन्त्रोक्तदेवत्यम्। आद्या (१) जगती। परा (२) त्रिष्टुप्।

'राकामहम्' (७,५०) इति द्व्यृचं मन्त्रोक्तदेवत्यं जागतम्।

---

१. °देवत्यमर्थापन° भा[१-२] [५] लं; नास्ति बी.

'देवानां पत्नीः' (७,५१) इति द्व्यृचं मन्त्रोक्तदेवपत्नीदेवताकम्। पूर्वा (१) आर्षी जगती। द्वितीया (२) चतुष्पदा पङ्क्तिः। एतैः (७,४८-५१) सिनीवाल्यादिदेवता इति।

'यथा वृक्षम्' (७,५२) इति नवर्चं कितववधकामः[1] अङ्गिराः। ऐन्द्रमानुष्टुभम्। 'ईडे अग्निम्' (३), 'गोभिष्टरेमामतिम्' (७) इति द्वे त्रिष्टुभौ। 'वयं जयेम' (४) इति जगती। 'उत प्रहाम्' (६) इति भुरिक् त्रिष्टुप्।

'बृहस्पतिर्नः' (७,५३) इति बार्हस्पत्यं त्रैष्टुभम्। अनया[2] इन्द्राबृहस्पती इति ॥ ६ ॥

'संज्ञानं नः' (७,५४) इति द्व्यृचम्। अथर्वा। सांमनस्यमाश्विनम्। आद्या (१) ककुम्मत्यनुष्टुप्। द्वितीया जगतीति।

'अमुत्रभूयादधि' (७,५५) इति सप्तर्चम्। ब्रह्मा। आयुष्यमुत बार्हस्पत्यमाश्विनं त्रैष्टुभम्। 'आयुर्यत्' (३) इति भुरिक्। 'सोमम्' (४) इत्युष्णिग्गर्भाऽऽर्षी पङ्क्तिः। 'प्र विशतम्' इति तिस्रः (५-७) अनुष्टुभः। अनेन मन्त्रोक्तान् देवानायुरिति।

'ऋचं साम यजामहे' (७,५६) इति ऋक्सामदेवत्यमानुष्टुभम्।

'ऋचं साम यत्' (७,५७) इति भृगुः। द्व्यृचमैन्द्रमानुष्टुभम्। द्वितीया [3]"ये ते पन्थानः"[3] (२) इति विराट् परोष्णिक्।

'तिरश्चिराजेः' (७,५८) इति सूक्तमष्टर्चम्। अथर्वा। मन्त्रोक्तवृश्चिकदेवताकम्। सपादा[4] द्वितीया (२;३[1]) वानस्पत्या[5]। 'अयं यो वक्रः' (४) इति विराट् प्रस्तारपङ्क्तिः। ब्राह्मणस्पत्यमुतेदमिति[6] ॥ ७ ॥

'यदाशसा' (७,५९) इति द्व्यृचम्। वामदेवः। जागतं सारस्वतम्।

---

१. कितवद्वंधनका° मूको; कितववाधनका° ह्वि; कितवबन्धनका° ब्लूं; कितवद्वन्द्रधनका° रै. २. आभ्याम् मूको. ३-३. नास्ति मूको. ४. संपादा मूको. ५. ब्राह्मणस्पत्या ह्वि. ६. वानस्पत्याय भा[1 3 5].

'इन्द्रावरुणा सुतपौ' (७,६०) इति द्व्यृचम्। कौरुपथिः। मन्त्रोक्तदेवत्यं जागतम्। द्वितीया (२) त्रिष्टुप्।

'यो नः शपात्' (७,६१) इति बादरायणिः। अरिनाशन-मन्त्रोक्तदेवताकमानुष्टुभम्।

'ऊर्जं बिभ्रत्' (७,६२) इति सप्तर्चम्। ब्रह्मा। वास्तोष्पत्यमानुष्टुभम्। प्रथमा (१) पराऽनुष्टुप् त्रिष्टुप्। अनेन रम्यान् गृहान् वास्तोष्पतीनप्रार्थयत्।

'यदग्ने' (७,६३) इति द्व्यृचम्। अथर्वा। आग्नेयमानुष्टुभम्।

'अयमग्निः' (७,६४) इत्याग्नेयम्। 'पृतनाजित्' (७,६५) इति मरीचिः[1] कश्यपः[2]। उभे (७,६४-६५) [3]जागते जातवेदसे[3]।

'इदं यत् कृष्णः' (७,६६) द्व्यृचम्। यमः। मन्त्रोक्तदेवत्यमुत नैर्ऋतम्। प्रथमा (१) भुरिगनुष्टुप्। द्वितीया (२) न्यङ्कुसारिणी बृहती।

'प्रतीचीनफलः' (७,६७) इति तृचम्। शुक्रः। अपामार्गवीरुध्दैवतमानुष्टुभम्। अनेन मन्त्रोक्तां देवतां दुरितापमृष्टिमप्रार्थयत्।

'यद्यन्तरिक्षे' (७,६८) इति ब्रह्मा। ब्राह्मणम्[4]। त्रिष्टुप्।

'पुनर्मैत्विन्द्रियम्' (७,६९) इत्यात्मदैवतम्[5]। पुरःपरोष्णिग् बृहती इति ॥ ८ ॥

'सरस्वति व्रतेषु' (७,७०) इति द्व्यृचम्, 'शिवा नः' (७,७१) इति सारस्वते उभे (७०-७१)। 'शं नः' (७,७२) इति सुखदेवताकम्। शन्तातिः। पूर्वस्य[6] पूर्वा (७,७०,१) अनुष्टुप्। परा (७,७०,२) त्रिष्टुप्। 'शिवा नः' (७,७१,१) इति गायत्री। 'शं नो वातः' (७,७२,१) इति पथ्या पङ्क्तिः।

---

१. मरीचः भा[1]. २. काश्यपः बी. ३-३. जगत्यौ जातवेदसं मूको. ४. ब्रह्माणम् भा[1]. ५. °देवत्यम् भा[1] लं बी. ६. नास्ति लं.

'यत् किं चासौ' (७,७३) इति पञ्चर्चम्। अथर्वा। मन्त्रोक्तदेवत्यमुत श्येनदेवताकं त्रैष्टुभम्। 'यातुधानाः' (२) इत्यतिजगतीगर्भा[1] जगती। 'अजिराधिराजौ' इति तिस्रः (३-५) अनुष्टुभः। पूर्वा (३) पुरःककुम्मती।

'परि त्वाग्ने' (७,७४) इत्याग्नेयमानुष्टुभम्।

'उत्तिष्ठत' (७,७५) इत्यैन्द्रं द्व्यृचम्। प्रथमा (१) अनुष्टुप्। द्वितीया (२) त्रिष्टुप्।

'श्रातं मन्ये' (७,७६) इत्यैन्द्रं त्रैष्टुभम्।

'समिद्धो अग्निर्वृषणा' (७,७७) इत्येकादशर्चं घर्मसूक्तम्[2] आश्विनमुत प्रत्यृचं मन्त्रोक्तदैवतं त्रैष्टुभम्। अनेन घर्ममिति। पूर्वा (१), 'यदुस्रियासु' (४), 'उप द्रव पयसा' (६) इति जगत्यः। 'समिद्धो अग्निरश्विना' (२) इति पथ्या बृहतीति[3] ॥ ९ ॥

'अपचितां लोहिनीनाम्' (७,७८) इति चतुर्ऋचम्। अथर्वाङ्गिराः। मन्त्रोक्तदेवत्यमुत जातवेदसमानुष्टुभम्।

'प्रजावतीः' (७,७९) इति द्व्यृचम्। उपरिबभ्रवः। आघ्न्यं त्रैष्टुभम्। 'पदज्ञाः' (२) इति [4]त्र्यवसाना भुरिक्[4] पथ्या पङ्क्तिः। अनेनाऽघ्न्यास्तुतिः।

'आ सुस्रसः' (७,८०) इति चतुर्ऋचम्। अथर्वा। अपचिद्भैषज्यदेवत्यमानुष्टुभम्। आद्या (१) विराट्। 'या ग्रैव्या' (२) इति परोष्णिक्।

'विद्म वै' (७,८१) इति द्व्यृचं जायान्येन्द्रदैवतं[5] त्रैष्टुभम्। पूर्वा (१) भुरिगनुष्टुप्।

'सान्तपना इदम्' (७,८२) इति तृचम्। अङ्गिराः। मन्त्रो-

---

१. °तिजागतग° लं. २. शर्मसू° लं. ३ बृहती भा[१ ३ ४].
४-४. °साना पञ्चपदा भु° भा[४] बी. ५. °देवत्यम् बी.

क्तमरुद्देवताकम्। पूर्वा (१) त्रिपाद् गायत्री। 'यो नः' (२) इति त्रिष्टुप्। 'संवत्सरीणाः' (३) इति जगती।

'वि ते मुञ्चामि' (७,८३) इति द्व्यृचमाग्नेयम्। अथर्वा[1]। प्रथमा (१) परोष्णिक्। परा (२) त्रिष्टुबिति। अनेनाऽग्निम-प्रार्थयदिति॥ १०॥

'यत्ते देवाः' (७,८४) इति चतुर्ऋचम्। अथर्वा। अमावा-स्यादेवताकम्। त्रैष्टुभम्। प्रथमा (१) जगती। अनेन मन्त्रोक्तां देवतामिति।

'पूर्णा पश्चात्' (७,८५) इति चतुर्ऋचम् पौर्णमासम्। 'प्रजापते न' (३) इति प्राजापत्या। त्रैष्टुभम्। 'वृषभं वाजिनम्' (२) इत्यनुष्टुप्। अनेन मन्त्रोक्तां देवतां चेति।

'पूर्वापरम्' (७,८६) इति षडृचं[2] सावित्रीसूर्यचान्द्रमसं[3] त्रैष्टुभम्। 'सोमस्यांशः' (३) इत्यनुष्टुप्[4]। 'दर्शोऽसि' इति द्वे (४-५) आस्तारपङ्क्ती। द्वितीया (५) सम्राट्। अनेन मन्त्रोक्तं चन्द्रमसं देवमभिष्टूयाऽप्रार्थयदिति[5]॥ ११॥

'अभ्यर्चत' (७,८७) इति षडृचम्[2]। संपत्कामः शौनकः। आग्नेयं त्रैष्टुभम्। 'मय्यग्रे' (२) इति ककुम्मती बृहती[6]। 'इहैव' (३) इति जगती। मन्त्रोक्तां देवतामभ्यस्तौत्।

'अप्सु ते राजन्' (७,८८) इति चतुर्ऋचम्। शुनःशेपः। वारुणमानुष्टुभम्। 'धाम्नोधाम्नः' (२) इति पथ्या पङ्क्तिः। 'उदुत्तमम्' इति द्वे (३-४) त्रिष्टुभौ। तत्र द्वितीया (४) बृहतीगर्भा।

'अनाधृष्यो जातवेदाः' (७,८९) इति तृचम्। भृगुः। ऐन्द्रं त्रैष्टुभम्। प्रथमा (१) आग्नेयी जगतीति।

---

१. नास्ति लं. २. षडर्चम् भा[५] लं. ३. °सूर्याचान्द्र° भा[५] लं.
४. इत्यानुष्टुभम् मूको. ५. °र्थयतीति बी. ६. नास्ति भा[५].

'त्यमू षु' (७,९०) तार्क्ष्यदेवत्यं त्रैष्टुभम्। 'त्रातारमिन्द्रम्' (७,९१) इत्यैन्द्रं त्रैष्टुभम्। 'उभे (९०-९१) स्वस्त्ययनकामोऽथर्वा'[1]।

'यो अग्नौ रुद्रः' (७,९२) इत्यथर्वा। रौद्रं जागतम्।

'अपेहि' (७,९३) इति तक्षकदेवत्यम्। गरुत्मान्। त्र्यवसाना बृहतीति।

'अपो दिव्याः' (७,९४) इति चतुर्ऋचमाग्नेयमानुष्टुभम्[2]। सिन्धुद्वीपः। 'एधोऽसि' (२) इति त्रिपात् निचृत् परोष्णिक्।

'अपि वृश्च' (७,९५) इति तृचम्। अङ्गिराः। मन्त्रोक्तदेवत्यम्। आद्या (१) गायत्री। 'वयं तत्' (२) इति विराट् पुरस्ताद्बृहती। 'यथा शेपः' (३) इति त्र्यवसाना षट्पदा भुरिग् जगतीति[3] ॥ १२ ॥

'इन्द्रः सुत्रामा (७,९६) इत्यथर्वा। चान्द्रमसं त्रैष्टुभम्। 'स[4] सुत्रामा' (७,९७) इति च प्रागुक्तर्षिच्छन्दोदेवत्यम्।

'इन्द्रेण मन्युना' (७,९८) इति भृग्वङ्गिराः। ऐन्द्रं गायत्रम्।

ध्रुवं ध्रुवेण (७,९९) इत्यथर्वा। सौम्यमानुष्टुभम्।

'उदस्य श्यावौ' (७,१००) इति तृचम्। 'असदन् गावः' (७,१०१) इति प्राकृतम्[5]। उभे (७,१००-१०१) कपिञ्जलः। पूर्वम् (१००) मन्त्रोक्तगृध्रदेवत्यम्। उत्तरम् (१०१) वायसम्। उभे आनुष्टुभे। 'अहमेनौ' इति द्वे (७,१००,२-३) भुरिजौ।

'यदद्य त्वा' (७,१०२) इति सूक्तमष्टर्चम्। अथर्वा। मन्त्रोक्तैन्द्राग्नं त्रैष्टुभम्। अनेन यज्ञसंपूर्णकामो यज्ञपतिमिष्ट्वाऽप्रार्थयत्।

'यज्ञ यज्ञम्' (५) इति त्रिपदाऽऽर्ची[6] भुरिग् गायत्री। 'एष ते यज्ञः' (६) इति त्रिपात् प्राजापत्या बृहती। 'वषड्हुतेभ्यः'

---

१-१. नास्ति लं. २. °ग्नेयं त्रैष्टुभम् लं. ३ जगती भा[२ ३ ४]. ४. तथा स भा[४] लं बी. ५. प्रागुक्तम् भा[२ ३ ५] बी ६. °दार्षी भा[४]; नास्ति बी.

(७) इति त्रिपदा साम्नी भुरिग् जगती। 'मनसस्पते' (८) इत्युपरिष्टाद्बृहती।

'सं बर्हिः'[1], 'परि स्तृणीहि' इति द्वे (७, १०३-१०४) मन्त्रोक्तदैवते त्रैष्टुभे। पूर्वा (७,१०३,१) विराट्। उत्तरा (७,१०४,१) भुरिक्।

'पर्यावर्ते' 'यत्स्वप्ने' इति द्वे (७,१०५-१०६) यमः। दुःस्वप्ननाशनदेवत्ये आनुष्टुभे।

'नमस्कृत्य' (७,१०७) इति प्रजापतिः। मन्त्रोक्तनानादेवत्यम्। विराट् पुरस्ताद्बृहतीति[2]॥ १३॥

'को अस्या नः', 'कः पृश्निम्' इति द्वे (७,१०८-१०९) ब्रह्मात्मदैवते त्रैष्टुभे।

'अपक्रामन्' (७,११०) इत्यथर्वा। मन्त्रोक्तदेवत्यमानुष्टुभम्।

'यदस्मृति' (७,१११) इति मन्त्रोक्तदैवतमुत जातवेदसम्। परार्धं वारुणम्। बृहतीगर्भा त्रिष्टुप्।

'अव दिवः' (७,११२) इति भृगुः। सौर्यमुताऽब्दैवतमानुष्टुभम्।

'यो नस्तायत्' (७,११३) इति द्व्यृचमाग्नेयं त्रैष्टुभम्। पूर्वा (१) बृहतीगर्भेति[3]।

'इदमुग्राय' (७, ११४) इति सप्तर्चम्। बादरायणिः। आग्नेयमुत मन्त्रोक्तदेवत्यम्[4] आनुष्टुभम्।

'इदमुग्राय' (१) इति विराट् पुरस्ताद्बृहती। 'घृतमप्सराभ्यः' (२), 'अप्सरसः' (३), 'यो नो ग्लुवे' (५), 'सं वसवः' (६) इति त्रिष्टुभः।

'अग्न इन्द्रः' (७,११५) इति तृचम्। भृगुः। ऐन्द्राग्नम्। पूर्वा (१) गायत्री। 'याभ्यामजयन्' (२) इति त्रिष्टुप्। 'उप त्वा देवः' (३) इत्यनुष्टुप्।

---

१. बर्हिरिति भा[१] कं. २. बृहती भा[५] कं. ३. °गर्भा कं. ४. °क्तदैवतं कं.

'इन्द्रस्य कुक्षिः'[1] (७,११६) इति ब्रह्मा । वार्षभं परा-बृहती त्रिष्टुप् ।

'शुम्भनी' (७,११७) इति द्व्यृचं[2] मन्त्रोक्ताऽऽदैवतम् । वरुणः । आनुष्टुभम् । पूर्वा (१) भुरिगिति[3] ॥ १४ ॥

'तृष्टिके' (७, ११८) इति द्व्यृचम् । भार्गवः । तृष्टिका-देवत्यम् । आद्या (१) विराडनुष्टुप् । परा (२) शङ्कुमती चतुष्पदा भुरिग् उष्णिक् ।

'आ ते ददे' (७,११९) इति द्व्यृचमग्नीषोमीयमानुष्टुभम् ।

'प्र पतेतः' (७,१२०) इति चतुर्ऋचम् । अथर्वाङ्गिराः । सावित्रं जातवेदसमानुष्टुभम् । अनेन पापामन्यायाऽऽगतां लक्ष्मीं स[4] निन्दयित्वा न्यायाऽऽगतां [5]पुण्यां लक्ष्मीमभिष्टूय[5] मन्त्रोक्तां देवतामप्रार्थयत् 'या मा लक्ष्मी' इति द्वे (२-३) त्रिष्टुभौ ।

'नमो रूराय' (७,१२१) इति द्व्यृचं चान्द्रमसम्[6] । आद्या (१) परोष्णिक् । 'यो अन्येद्युः' (२) इत्येकावसाना द्विपदाऽऽर्च्य-नुष्टुप् ।

'आ मन्द्रैः' (७,१२२) इत्यैन्द्रम् । पथ्या बृहती ।

'मर्माणि ते' (७,१२३) इति बहुदेवत्यमुत चान्द्रमसं त्रैष्टुभमिति ॥ १५ ॥

इति[7] ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां
पञ्चमः पटलः समाप्तः[8] ॥

---

१. कुक्षिरसि भा[१]. २. तृचं लं. ३. भुरिक् भा[१ ३ ४] लं. ४. नास्ति भा[१]. ५-५. पुण्यामभिष्टूय भा[१-३] बी. ६. °मस्यम् भा[२ ३]. ७. इति श्री भा. ८. संपूर्णः भा[१-४]; नास्ति लं.

# अथ

# षष्ठं पटलम्

## ( अथर्ववेदे अष्टमं काण्डम् )

†अथ क्षुद्रकाण्डार्थसूक्तमन्त्राणामृषिदैवतच्छन्दांस्युच्यन्ते । ततो यावद् एकादशकाण्डान्तमर्थसूक्तप्रकृतिः तावद् विहाय पर्यायान् 'विराड् वै' ( ८,१० ) प्रभृतीनिति । तत्र—

'अन्तकाय मृत्यवे', 'आरभस्व' इति द्वे ( ८,१-२ ) [1]ब्रह्मा ऋषिः । आयुष्ये[1] त्रैष्टुभे अपश्यत् ।

सर्वत्रानुक्तेऽपि शेषोऽनुवर्तते । या यद्देवत्येति च ।

आद्यस्याद्या ( ८,१,१ ) पुरोबृहती त्रिष्टुप् । 'उदेनम्' इति द्वे ( ८,१,२-३ ), 'उत् त्वा द्यौः' इति पञ्च ( ८,१,१७-२१ ) अनुष्टुभः ।

---

†अथ इत्यतः पूर्वम्—

'अथेयं[2] [3]प्राग्रा परमेत्यरंकृषतनुक्रमेण[3] इत्यनुसंधत्ताभिधेयेनाविष्कृताऽथर्वमन्त्रार्षिच्छन्दोदैवतानुक्रान्तिः (?) । तां गुर्वनुज्ञातो योऽधीतेऽध्यापयति च स मन्त्रपाठफलं सम्यगश्नुते । तेन विनियुक्ता मन्त्राश्च सवीर्या भवन्ति । देहान्ते ब्रह्मलोकमनुभूय कियत्कालं तदन्विह द्विजोत्तमकुलेऽवतीर्य परमतुलं सुखं भुङ्क्ते । यः पुनरेतां छद्मनाऽऽदत्ते ग्राहयति वा । ततः पठति पाठयति च स गतायुरिहाप्रतिष्ठो दण्ड्यश्च भवति । मृतोऽन्धतामिस्रं[4] नीचैर्गमनं यावदक्षरं कालमनुभूयेमं पुनर्मृत्युलोकं प्राप्योलूकत्वमश्नुते । कियत्कालं पुनर्मृतोऽपि तमेव नरकमनुभूय[5] पुनरिहावतीर्य द्विजकुले विद्याभ्यासवशाद् गुरुध्रुग् जन्मान्धोऽवश्यं भवतीति, निश्चितोऽभिभवेदिति । यथोक्तप्रकाशस्य चोभयथा नूनमक्षय्यं सुकृतं भवेदिति' मूको.

---

१-१. ब्रह्मार्ष्यायुष्ये मूको; आर्ष्य् ( आर्त्य् ? ) आयु° ह्वि. २. श्रीगणेशाय नमः, अथे° गु भा[४]. ३-३. प्राग्रा परमेत्यपरं कृषतनुक्रमेण भा[५]; °परं कृषनुक° भा[४]; °परं क्षषनक्रम° बी. ४. °तमिश्रं भा[२] [५] बी. ५. °भूयेमं भा[५] लं बी.

'उत्क्रामातः पुरुषः' (८,१,४), 'श्यामश्च त्वा' (९), 'जीवभ्यस्त्वा' इति द्वे (१५-१६) प्रस्तारपङ्क्तयः। 'मा ते मनः' (७) इति त्रिपाद् विराड् गायत्री। 'मा गतानाम्' (८) इति विराट् पथ्या बृहती। 'मा त्वा क्रव्यात्' (१२) इति त्र्यवसाना पञ्चपदा जगती। 'बोधश्च त्वा' (१३) इति त्रिपाद् भुरिक् महाबृहती। 'ते त्वा रक्षन्तु' (१४) इति एकावसाना द्विपदा साम्नी भुरिक् बृहती। इदमेकविंशकमिहाद्यम् (८,१) उच्यते। इति ॥ १ ॥

'आ रभस्व' इति द्वे (८, २, १-२) 'अधि ब्रूहि' (७) इति भुरिजः। 'वातात् ते' (३) इति आस्तारपङ्क्तिः। 'प्राणेन त्वा' (४) इति प्रस्तापङ्क्तिः। 'जीवलां नघारिषाम्' (६) इति पथ्या पङ्क्तिः। 'अस्मै मृत्यो' (८) इति पुरस्ताज्ज्योतिष्मती जगती। 'देवानां हेतिः' (९) इति पञ्च-पदा जगती। 'कृणोमि ते' (११) विष्टारपङ्क्तिः। 'आ-रादरातिम्' (१२) इति पुरस्ताद्बृहती। 'शिवे ते स्ताम्' (१४) इति त्र्यवसाना षट्पदा जगती। 'शिवास्ते' (१५) इति पथ्या पङ्क्तिः। 'यदश्नासि' (१९) इति उपरिष्टाद्-बृहती। 'शतं ते' (२१) इति सतःपङ्क्तिः। 'परि त्वा' (२६) इति आस्तारपङ्क्तिः। 'शरदे त्वा' (२२), 'अग्नेः शरीरम्' (२८) इति पुरस्ताद्बृहत्यौ। 'अयं जीवतु' (५), 'यत्ते नियानम्' (१०), 'यत्ते वासः' इति तिस्रः (१६-१८), 'अहे च त्वा' (२०) इति, 'मृत्युरीशे' इति तिस्रः (२३-२५), 'ये मृत्यवः' (२७) इति चैता अनुष्टुभः। तत्र 'यत् क्षुरेण' (१७) इति त्रिपात्। [1]'यदाद्यम्' (१९) विंश (२०) सहितम्[1]। अष्टर्चोऽपरा इति ॥२॥

'रक्षोहणम्,' 'इन्द्रासोमा' इति द्वे (८,३-४) अनुवाकम्[2] चातनः। पूर्वम् (८,३) षड्विंशमाग्नेयम्। उत्तरम् (८,४) पञ्चविंशकं मन्त्रोक्तदेवत्यं जागतम्। आद्यम् (८,३) त्रैष्टुभम्।

---

१-१. इदमाद्यविंशसहितम् लं; इदमाद्यविंशसतम् बी; इदमाद्यं विंशंसहितम् भा[5]. २. अनुवाकौ भा[3];

तत्र[1] 'उतारब्धान्' ( ८, ३, ७ ), 'पराद्य देवाः' इति द्वे ( १४-१५ ), 'संवत्सरीणं पयः' ( १७ ), 'तदग्ने ( २१ ), 'यदग्ने' ( १२ ) इति भुरिजः । 'ये ते शृङ्गे' ( २५ ) इति पञ्चपदा बृहतीगर्भा जगती । 'परि त्वा अग्ने' इति द्वे ( २२-२३ ) अनुष्टुभौ । 'अग्नी रक्षांसि' ( २६ ) इति गायत्री ।

'यो मा पाकेन' इति सप्त ( ८,४,८-१४ ), 'यो मायातुम्' इति द्वे ( १६-१७ ), 'प्र वर्तय दिवः' ( १९ ), 'उलूकयातुम्' ( २२ ), 'इन्द्र जहि' ( २४ ) इति त्रिष्टुभः । 'एत उ त्ये' ( २० ), 'मा नो रक्षः' ( २३ ) इति भुरिजौ । 'प्रति चक्ष्व' ( २५ ) इति अनुष्टुबिति[2] ॥ ३ ॥

'अयं प्रतिसरः' ( ८,५ ) इति द्वाविंशकम्[3] । शुक्रः । कृत्यादूषणदेवत्यमुत मन्त्रोक्तदेवत्यमानुष्टुभम् ।

आद्या ( १ ) उपरिष्टाद्बृहती । द्वितीया ( २ ) त्रिपाद् विराड् गायत्री । 'अनेनेन्द्रः' ( ३ ) इति चतुष्पाद् भुरिग् जगती । 'तदग्निः' ( ५ ) इति संस्तारपङ्क्तिः भुरिक् । 'अन्तर्दधे' ( ६ ) इति उपरिष्टाद्बृहती । 'ये स्राक्त्यम्' इति द्वे ( ७-८ ) ककुम्मत्यौ । 'याः कृत्याः' ( ९ ) इति चतुष्पात् पुरस्कृतिर्जगती । 'अस्मै मणिम्' ( १० ) इति त्रिष्टुप् । 'उत्तमो असि' ( ११ ) इति पथ्या पङ्क्तिः । 'कश्यपस्त्वाम्' ( १४ ) इति त्र्यवसाना षट्पदा जगती । 'यस्त्वा कृत्याभिः' ( १५ ) इति पुरस्ताद्बृहती । 'ऐन्द्राग्नं वर्म' ( १९ ) इति जगतीगर्भा त्रिष्टुप् । 'आ माऽरुक्षत्' ( २० ) इति विराड्गर्भाऽऽस्तारपङ्क्तिः[4] । 'अस्मिन्निन्द्रः' ( २१ ) इति पराविराद् त्रिष्टुप् । 'स्वस्तिदा विशाम्' ( २२ ) इति त्र्यवसाना सप्तपदा[5] विराड्गर्भा भुरिक् शक्करीति[6] ॥ ४ ॥

'यौ ते माता' (८,६) इति षड्विंशकम्[7] । मातृनामा ऋषिः ।

---

१. नास्ति भा[१-५] बी. २. अनुष्टुप् भा[१ ४-५] लं. ३. द्वाविंशः भा[१ ४] बी; द्वाविंश लं. ४. प्रस्तारपं° लं बी ह्वि. ५. सप्तपात् भा[५] लं. ६. शाक्करी भा[४] लं. ७. षड्विंशं मूको.

मातृनामदेवत्यमुत मन्त्रोक्तदेवत्यमानुष्टुभम्, अनेन[1] गर्भरक्षणार्थं-श्चास्तौत्।

'पलालानुपलालौ' (२) इति पुरस्ताद्बृहती। 'ये शालाः' (१०) इति त्र्यवसाना षट्पदा जगती। 'ये कुकुन्धाः' इति द्वे (११-१२), 'ये पूर्वे' (१४), 'पर्यस्ताक्षाः' (१६) इति पथ्या-पङ्क्तयः। 'येषां पश्चात्' (१५) इति त्र्यवसाना सप्तपदा शाक्वरी ब्राह्मणस्पत्या। 'उद्धर्षिणम्' (१७) इति तथा जगतीति।

'या बभ्रवः' (८,७) इति साष्टाविंशकम्[2]। अथर्वा। भैषज्यायुष्यमुत मन्त्रोक्तौषधिदेवताकमानुष्टुभम्।

'त्रायन्तामिमम्' (२) इति उपरिष्टाद् भुरिग् बृहती। 'आपो अग्रम्' (३) इति पुर उष्णिक्। 'प्रस्तृणतीः' (४) इति पञ्चपदा परानुष्टुब् अतिजगती। 'यद् वः सहः' इति द्वे (५-६) पथ्यापङ्क्ती। द्वितीया (६) विराड्गर्भा भुरिक्। 'अवकोल्वाः' (९) इति द्विपदाऽऽर्ची भुरिग् अनुष्टुप्। 'उन्मुञ्चन्तीः' (१०) इति पथ्या पङ्क्तिः। 'मधुमन्मूलम्' (१२) इति पञ्चपदा विराड् अतिशाक्वरीति[3] ॥ ५ ॥

'वैयाघ्रो मणिः' (१४) इति उपरिष्टाद् निचृद् बृहती। 'यावती-नामोषधीनाम्' (२५) इति पथ्या पङ्क्तिः। 'यावतीषु मनुष्याः' (२६) इति निचृत्। 'उत त्वाहार्षम्' (२८) इति भुरिक्।

'इन्द्रो मन्थतु' (८,८) इति चतुर्विंशकम्[4]। भृग्वङ्गिराः। ऐन्द्रमुत वानस्पत्यं परसेनाहननम्[5] आनुष्टुभम्।

'पूतिरज्जुः' इति द्वे (२-३) बृहत्यौ। पूर्वा (२) उपरिष्टात्। द्वितीया (३) विराट्। 'परुषानमून्' (४) इति बृहती पुरस्तात्प्रस्तार-पङ्क्तिः। 'बृहद्धि जालम्' (६) आस्तारपङ्क्तिः। 'बृहत् ते' (७) इति विपरीतपादलक्ष्मा चतुष्पदाऽतिजगतीति। 'अयं लोकः' इति तिस्रः (८-१०) उपरिष्टाद्बृहत्यः। 'नयतामून्' (११) इति पथ्या बृहती। परा (१२) भुरिक्। 'पराजिताः' इति द्वे (१९-२०) पुरस्ताद्बृहत्यौ। पूर्वा

---

१. ब्रह्माऽनेन भा[१] ४-५ बी. २. इत्यष्टा° भा[४]. ३. अतिशक्वरी भा[५] कं. ४. चतुर्विंशम् मूको. ५. परसंनाहननम् कं.

( १९ ) विराट् । उत्तरा ( २० ) निचृत् । 'सं क्रोशताम्' (२१) इति त्रिष्टुप् । 'दिशश्चतस्रः' ( २२ ) इति चतुष्पदा शक्करी । 'संवत्सरो रथः' ( २३ ) इति उपरिष्टाद्बृहती । 'इतो जयेतः' ( २४ ) इति त्र्यवसाना त्रिष्टुबुष्णिग्गर्भा पराशक्करी पञ्चपदा जगतीति[1] ॥६॥

'कुतस्तौ' ( ८, ९ ) षड्विंशकम्[2] । अथर्वा । काश्यपेयमुत सर्वार्षच्छान्दसं[3] त्रैष्टुभम् ।

'यो अक्रन्दयत्' इति द्वे ( २-३ ) पङ्क्तीः । द्वितीया ( ३ ) आस्तारपङ्क्तिः । 'बृहतः परि' इति द्वे ( ४-५ ) अनुष्टुभौ । 'यां प्रच्युताम्' ( ८ ) इति[4], 'इयमेव' ( ११ ) इति जगत्यौ । 'अप्राणैति' ( ९ ) इति[5] भुरिक् । 'छन्दःपक्षे उषसा' ( १२ ), 'इत्थं श्रेयः' ( २२ ) इति जगत्यौ । 'अग्नीषोमावदधुः' ( १४ ) इति चतुष्पदाऽतिजगती । 'अष्टेन्द्रस्य' ( २३ ), 'को नु गौः' ( २५ ) इति द्वे अनुष्टुभौ इति ॥ ७ ॥

'विराड् वै' ( ८,१०,१ ) प्रभृति 'वसो भूयाय' ( १६, ९, ४ ) अन्तान् त्रयस्त्रिंशत्सप्तशतं पर्यायमन्त्रानथर्वाऽऽचार्योऽपश्यत् । तत्र 'विराड् वै' इति षट् ( ८,१०-१५ ) पर्याया विराड्देवत्याः ।

तत्राद्यम् ( ८.१० ) त्रयोदशकम् । प्रथमा ( १ ) त्रिपदाऽऽर्ची पङ्क्तिः । 'सोदक्रामत्' इति षट् ( २,४,६,८,१०,१२ ) याजुषीजगत्यः । 'गृहमेधी' ( ३ ), 'यन्त्यस्य सभाम्' ( ९ ) इति साम्न्यनुष्टुभौ । 'यन्त्यस्य देवाः' ( ५ ) इति आर्च्यनुष्टुप् । 'यज्ञर्तः' ( ७ ) 'यन्त्यस्यामन्त्रणम्' ( १३ ) विराड्गायत्र्यौ । 'यन्त्यस्य समितिम्' ( ११ ) इति साम्नी बृहतीति ॥ ८ ॥

'सान्तरिक्षे'[6] ( ८,११ ) इति दशकम् । आद्या ( १ ) त्रिपदा, 'ओषधीरेवास्मै' ( ९ ) इति साम्न्यनुष्टुभौ । 'तां देवमनुष्याः' ( २ ) उष्णिग्गर्भा चतुष्पदा उपरिष्टाद् विराड् बृहती । 'तामुप' ( ३ )

---

१. जगती भा[४] लं. २. षड्विंशम् मूको. ३. सर्वार्षं छान्दसं मूको. ४. नास्ति भा[४] लं. ५. नास्ति भा[४]. ६. सोदक्रामत्सान्त° संहितायाम्.

इत्येकपदा याजुषी गायत्री। 'ऊर्जे एहि' (४) एकपदा, 'ओषधीरेव' (७) इति साम्नां पङ्क्ती। 'तस्या इन्द्रः' (५) विराड् गायत्री। 'बृहच्च रथन्तरं च' (६) आर्ची अनुष्टुप्। 'अपो वामदेव्येन' (८) आसुरी गायत्री। 'अपो वामदेव्यम्' (१०) साम्नां बृहतीति ॥ ९ ॥

'सा[1] वनस्पतीन्' (८,१२ [१०,३]) इत्यष्टौ। प्रथमा (१) चतुष्पदा विराडनुष्टुप्। 'तस्माद् वनस्पतीनाम्' (२) आर्ची त्रिष्टुप्। 'सा पितॄन्' (३), [2]'देवान्' (५), 'मनुष्यान्'[2] (७) इति तिस्रः चतुष्पादः प्राजापत्याः पङ्क्तयः। 'तस्मात् पितृभ्यः' (४), 'देवेभ्यः' (६), 'मनुष्येभ्यः' (८) इति तिस्र आर्चीबृहत्यः।

'साऽसुरान्' इति द्वे (८,१३-१४ [१०,४-५]) षोडशके। तत्र आद्या (८,१३,१), 'सा पितॄन्' (८,१३,५), 'सा देवान्' (८,१४,१), 'सा सर्पान्' (८,१४,१३) इति चतुष्पादः साम्नां जगत्यः। 'तस्या विरोचनः' (८,१३,२), 'तस्या यमः' (८,१३,६), 'तस्या मनुः' (८,१३,१०), 'तस्याः कुबेरः' (८,१४,१०), 'तस्यास्तक्षकः' (८,१४,१४) इति साम्नां बृहत्यः। 'तां देवाः' (८,१४,१), 'तां द्विमूर्धा' (८,१३,३) इति साम्न्युष्णिहौ। 'तां मायाम्' (८,१३,४), 'तां स्वधाम्' (८,१३,८), 'तामूर्जाम्' (८,१४,४), 'तद्विषम्' (८,१४,१६) इति आर्च्यनुष्टुभः। 'तामन्तकः' (८,१३,७) आसुरी गायत्री। 'सा मनुष्यान्' (८,१३,९), 'सा सप्तऋषीन्' (८,१३,१३), 'सेतरजनान्' (८,१४,९) इति चतुष्पाद उष्णिहः। 'तां पृथी' (८,१३,११) प्राजापत्याऽनुष्टुप्। 'ते कृषिम्' (८,१३,१२), 'तद् ब्रह्म' (८,१३,१६), 'तं पुण्यम्' (८,१४,८) इति आर्चीत्रिष्टुभः। 'तस्याः सोमः' (८,१३,१४), 'तस्या इन्द्रः' (८,१४,२) इति साम्न्युष्णिहौ। 'तां बृहस्पतिः' (८,१३,१५), 'तां वसुरुचिः' (८,१४,७), 'तां रजतनाभिः' (८,१४,११) इति विराड्गायत्र्यः ॥१०॥

'सा गन्धर्वाप्सरसः' (८,१४,५) इति चतुष्पदा प्राजापत्या जगती। 'तस्याश्चित्ररथः' (८,१४,६) साम्नां त्रिष्टुप्। 'तां तिरोधाम्' (८,१४,१२)

---

१. सोदक्रामत्सा व° संहितायम्। २-२. नास्ति मूको.

त्रिपदा ब्राह्मी भुरिग् गायत्री। 'तां धृतराष्ट्रः' (८,१४,१५) साम्न्यनुष्टुबिति।

'तद् यस्मै' (८,१५[१०,६]) इति चतुष्कम्। आद्या (१) विराड्गायत्री। 'न च' (२) इति साम्नां त्रिष्टुप्। 'यत् प्रत्याहन्ति' (३) इति प्राजापत्याऽनुष्टुप्। 'विषमेव' (४) इति आर्च्युष्णिक्। इहानुक्तपादा द्विपदा इति ॥ ११ ॥

---

# अथर्ववेदे नवमं काण्डम्

'दिवस्पृथिव्याः' ( ९,१ ) इति चतुर्विंशकम्[1] । अथर्वा । मधुदेवत्यमाश्विनं त्रैष्टुभम् ।

द्वितीया ( २ ) त्रिष्टुब्गर्भा पङ्क्तिः । 'पश्यन्त्यस्याः' ( ३ ) इति परानुष्टुप् । 'कस्तम्' ( ६ ), 'स तौ' ( ७ ) इति यवमध्ये महाबृहत्यौ । पूर्वा ( ६ ) अतिशाक्वरगर्भा । उत्तरा ( ७ ) अतिजागतगर्भा । 'हिङ्करिक्रती' ( ८ ) बृहतीगर्भा संस्तारपङ्क्तिः । 'यामापीनाम्' ( ९ ) इति पराबृहती प्रस्तारपङ्क्तिः । 'स्तनयित्नुस्ते' ( १० ) इति परोष्णिक् पङ्क्तिः । 'यथा सोमः प्रातःसवने' इति तिस्रः ( ११-१३ ), 'सं माग्ने' इति द्वे ( १५-१६ ), 'यद् गिरिषु' इति द्वे ( १८-१९ ) अनुष्टुभः । 'मधु जनिषीय' ( १४ ) इति पुर उष्णिक् । 'यथा मक्षाः' ( १७ ) इति उपरिष्टाद्विराड् बृहती । 'स्तनयित्नुस्ते' ( २० ) इति भुरिक् विष्टारपङ्क्तिः । 'पृथिवी दण्डः' ( २१ ) इति एकावसाना द्विपदाऽऽर्ची अनुष्टुप् । 'यो वै कशायाः' ( २२ ) इति त्रिपदा ब्राह्मी पुरउष्णिक् । 'मधुमान् भवति' ( २३ ) इति द्विपदाऽऽर्ची पङ्क्तिः । 'यद् वीध्रे' ( २४ ) इति त्र्यवसाना षट्पदा अष्टिरिति ॥ १२ ॥

'सपत्नहनम्' ( ९,२ ) इति पञ्चविंशकं कामदेवत्यं त्रैष्टुभम् ।

'सा ते काम' ( ५ ) इति अतिजगती । 'अध्यक्षः' ( ७ ) इति जगती । 'इदमाज्यम्' ( ८ ) इति त्रिपदा[2] आर्ची पङ्क्तिः । 'अवधीत् कामः' ( ११ ) इति भुरिक् । 'तेऽधराञ्चः' ( १२ ) इति अनुष्टुप् 'अग्निर्यवः' ( १३ ) इति द्विपदाऽऽर्ची अनुष्टुप् । 'असर्ववीरः' इति द्वे ( १४-१५ ), 'येन देवाः' इति द्वे ( १७-१८ ), 'यावतीर्दिशः' इति द्वे ( २१-२२ ) जगत्यः । 'यावती द्यावापृथिवी' ( २० ), 'ज्यायान्' ( २३ ) इति भुरिजौ । 'यत् ते काम' ( १६ ) इति चतुष्पदा शक्वरीगर्भा पराजगतीति ॥ १३ ॥

'उपमिताम्' ( ९,३ ) इति चैकत्रिंशत्कम् । भृग्वङ्गिराः । शालादेवत्यमानुष्टुभम् ।

---

१. चतुर्विंशर्चं मूको. २. द्विपदा द्वि.

'यानि ते' ( ६ ) इति पथ्या पङ्क्तिः । 'हविर्धानम्' ( ७ ) इति परोष्णिक् । 'अन्तरा द्याम्' ( १५ ) इति त्र्यवसाना पञ्चपदाऽतिशक्वरी । 'तृणैरावृता' ( १७ ) इति प्रस्तारपङ्क्तिः । 'या द्विपक्षा' ( २१ ) इति आस्तारपङ्क्तिः । 'प्राच्या दिशः' ( २५ ), 'दिशोदिशः' ( ३१ ) इति त्रिपादौ प्राजापत्याबृहत्यौ । 'दक्षिणाया दिशः' ( २६ ) इति साम्नां त्रिष्टुप् । 'प्रतीच्याः' ( २७ ), 'उदीच्याः' ( २८ ), 'ध्रुवायाः' ( २९ ), 'ऊर्ध्वायाः' ( ३० ) इति प्रतिष्ठा नाम गायत्र्यस्त्रिपाद:[1] । एताः सप्त ( २५-३१ ) एकावसाना इति ॥१४॥

'साहस्रस्त्वेषः' ( ९,४ ) इति चतुर्विंशकम् । ब्रह्मा । आर्षभं त्रैष्टुभम् ।

'इन्द्रस्यौजः' ( ८ ) इति भुरिक् । 'सोमेन पूर्णम्' ( ९ ), 'बृहस्पतिः सविता' ( १० ) इति जगत्यौ । 'य इन्द्र इव[2]' इति सप्त ( ११-१७ ), 'ब्राह्मणेभ्य ऋषभम्' इति द्वे ( १९-२० ), 'उपेहोपपर्चन' ( २३ ) इत्यनुष्टुभः । 'शतयाजम्' ( १८ ) इति उपरिष्टाद्बृहती । 'अयं पिपानः' ( २१ ) इति आस्तारपङ्क्तिः । 'एतं वो युवानम्' ( २४ ) इति जगतीति ।

'आ नय' ( ९,५ ) इत्यष्टात्रिंशत्कम्[3] । भृगुः । मन्त्रोक्ताजपञ्चौदनदेवत्यं[4] त्रैष्टुभम् ।

'प्र पदः' ( ३ ) इति चतुष्पात् पुरोऽतिशक्वरी जगती । 'अनुच्छय श्यामेन' ( ४ ), 'अजस्त्रिनाके' ( १० ) इति जगत्याविति[5] ॥ १५ ॥

'अमोतम्' ( १४ ), येना सहस्रम्' (१७), 'या पूर्वम्' इति चतस्रः[6] ( २७-३० ) अनुष्टुभः । 'आत्मानं पितरम्' ( ३० ) इति ककुम्मती । 'नास्यास्थीनि' ( ३३ ) इति पुरउष्णिक् । 'अजोऽसि' ( १६ ) इति त्रिपादनुष्टुप् । 'अजः पक्वः' ( १८ ) इति त्रिपाद् विराड्[7] गायत्री । 'इदमिदमेव' ( २४ ) इति पञ्चपदाऽनुष्टुबुष्णिग्गर्भा उपरिष्टाद्बार्हता विराड् जगती । 'अजो वा इदमग्रे' इति तिस्रः ( २०-२२ ), 'पञ्च

१. त्रिपदाः भा[४]. २. इव देवेषु बी. ३. °रिंशत् मूको. ४. °क्ताजं पं° भा[५] बी; °क्तात् पं° भा[१ ४]. ५. जगत्यौ भा[१ ४-५]. ६. तिस्रः गु. ७. नास्ति बी.

रुक्म' ( २६ ) इति पञ्चपदा अनुष्टुबुष्णिग्गर्भा उपरिष्टाद्बार्हता भुरिजः[1]। 'यो वै नैदाघम्' ( ३१ ) इति सप्तपदा अष्टिः। 'यो वै कुर्वन्तम्' इति चतस्रः ( ३२-३५ ) दशपदाः प्रकृतयः। 'यो वा अभिभुवम्' ( ३६ ) इति दशपदा आकृतिः। 'अजं च पचत' ( ३७ ) इति त्रिपाद् विराड् गायत्री। 'तास्तं रक्षन्तु' ( ३८ ) इत्येकावसाना द्विपदा साम्नी त्रिष्टुबिति ॥ १६ ॥

'यो विधात्' ( ९,६ ) षट् पर्यायाः। ब्रह्मा। आतिथ्या उत विद्यादेवत्याः।

तत्र 'यो विंद्यात्' ( ९,६ [६,१] ) [2]सप्तदशकम्। आद्या[2] ( १ ) नागी[3] नाम त्रिपाद् गायत्री। 'सामानि यस्य' ( २ ) त्रिपदा आर्षी गायत्री। 'यद् वा अतिथिपतिः' ( ३ ), 'यदावसथान्' ( ७ ) साम्नी-त्रिष्टुभौ। 'यदभिवदति' ( ४ ), 'यदुपरिशयनम्' ( ९ ) आर्च्यनुष्टुभौ। 'या एव यज्ञे' ( ५ ) आसुरी गायत्री। 'यत् तर्पणम्' ( ६ ) त्रिपदा साम्नां जगती। 'यदुपस्तृणन्ति' ( ८ ) याजुषी त्रिष्टुप्। 'यत् कशि-पूपबर्हणम्' ( १० ) साम्नां भुरिग् बृहती। 'यदाञ्जनाभ्यञ्जनम्' ( ११ ), 'ये व्रीहयः' इति तिस्रः ( १४-१६ ) साम्न्यनुष्टुभः। 'यत् पुरा' ( १२ ) इति विराड् गायत्री। 'यदशनकृतम्' ( १३ ) साम्नां निचृत् पङ्क्तिः। 'स्रुग् दर्विः' ( १७ ) त्रिपाद् विराड् भुरिग् गायत्रीति ॥ १७ ॥

'यजमानब्राह्मणं वै' (९,७ [६,२]) इति त्रयोदशकम्[4]। प्रथमा ( १ ) विराद् पुरस्ताद्बृहती। 'यदाह भूयः' ( २ ), 'प्रजापतेर्वा एष' ( १२ ) साम्नां त्रिष्टुभौ। 'उप हरति' ( ३ ) आसुर्यनुष्टुप्। 'तेषामासन्नानाम्' ( ४ ) साम्न्युष्णिक्। 'स्रुचा हस्तेन' ( ५ ), 'प्राजापत्यो वै' ( ११ ) इति साम्नां बृहत्यौ। द्वितीया ( ११ ) भुरिक्। 'एते वै प्रियाः' ( ६ ) आर्च्यनुष्टुप्। 'स य एवं विद्वान्' ( ७ ) इति [5]पञ्चपदा विराद् पुरस्ताद्बृहती[5]। [6]'सर्वो वा एष जग्धपाप्मा' ( ८ ) आसुरी गायत्री[6]।

---

१. भुरिक् मूको. २-२. दशसप्तर्चाद्या भा[१ ४]; सप्तपूर्वाद्या लं; सप्तदश-पूर्वाद्या बी. ३. नास्ति भा[५] लं. ४. त्रयोदश मूको. ५-५. त्रिपात्स्व-राडनुष्टुप् भा[४] लं बी. ६-६. नास्ति भा[४-५] लं तु. हि.

'सर्वो वा एषोऽजग्धपाप्मा' (९) साम्नी अनुष्टुप्। 'सर्वदा वा एषः' (१०) त्रिपदा आर्ची त्रिष्टुप्। 'योऽतिथीनाम्' (१३) त्रिपदा आर्ची पङ्क्तिरिति ॥ १८ ॥

'इष्टं च वै' (९,८ [६,३]) इति नवकम्। प्रथमाः षट् (१-६), 'एतद् वा उ स्वादीयः' (९) इति त्रिपादः पिपीलिकमध्या गायत्र्यः। 'एष वा अतिथिः' (७) साम्नी बृहती। 'अशितावति' (८) इति पिपीलिकमध्या उष्णिक्।

'स य एवम्', 'तस्मा उषाः' (९,९-१० [६,४-५]) द्वौ दशकौ। पूर्वस्याद्याश्चतस्रः (९,९,१;३;५;७) 'स य एवम्' इति शब्दरूपाः प्राजापत्या अनुष्टुभः। 'स य एवं विद्वानुदकम्' (९,९,९) इति भुरिक्। 'यावदग्निष्टोमेन' इति चतस्रः (९,९,२;४;६;८) यावच्छब्दरूपाः त्रिपादो गायत्र्यः। 'प्रजानां प्रजननाय' (९,९,१०) इति चतुष्पात् प्रस्तारपङ्क्तिः।

उत्तरस्याद्या (९, १०, १) साम्न्युष्णिक्। 'बृहस्पतिरूर्जया' (९,१०,२) इति पुरउष्णिक्। 'निधनं भूत्याः' (९,१०,३;५;७;१०)[1] साम्नी[2] भुरिक् बृहती। 'तस्मा उद्यन्' (९,१०,४), 'अभ्रः' (९,१०,६), 'उप हरति' (९,१०,९) इति साम्नामनुष्टुभः[3]। [4]'मध्यन्दिनः' (९,१०,५) त्रिपदा[4] निचृद् विषमा नाम गायत्री। 'विद्योतमानः' (९,१०,७) त्रिपदा विराड् विषमा† नाम गायत्री। 'अतिथीन् प्रति' (९,१०,८) इति त्रिपाद् विराड् अनुष्टुबिति ॥ १९ ॥

'यत् क्षत्तारम्' (९,११ [६,६]) इति चतुर्दशकम् पूर्वा। (१) आसुरी गायत्री। 'यत् प्रतिशृणोति' (२) साम्न्यनुष्टुप्। 'यत् परिवेष्टारः' (३), 'यद् वा अतिथिपतिः' (५) [5]त्रिपदे आर्चीपङ्क्ती[5]। 'तेषां न' (४) इत्येकपदा प्राजापत्या गायत्री। 'यत् सभागयति' इति षट् (६-११) आर्च्यो बृहत्यः। 'स उपहूतः' (१२) एकपदाऽऽसुरी जगती। 'आप्नोतीमम्' (१३) याजुषी त्रिष्टुप्। 'ज्योतिष्मतः' (१४) एकपदाऽऽसुरी उष्णिक्।

---

१. पञ्चमसप्तमयोर्द्वितीयमवसानम्   २. साम्नां बी.   ३. साम्न्यनु° बी.   ४-४. नास्ति लं.   † प्रथममवसानम्   ५-५. त्रिपदार्चां° भा° लं बी.

'प्रजापतिश्च' (९,१२[७]) एकः[1] षड्विंशः गव्यः। आद्या (१) आर्ची बृहती। 'सोमो राजा' (२) आर्च्युष्णिक्। 'विद्युज्जिह्वाः' (३), 'श्येनः क्रोडः' (५) आर्च्यनुष्टुभौ। 'विश्वं वायुः' (४), 'नदी सूत्री' (१४), 'विश्वव्यचाः' (१५), 'देवजनाः' (१६) इति साम्नां बृहत्यः। 'देवानां पत्नीः' (६), 'इन्द्राणी' (८) आसुरीगायत्र्यौ। 'मित्रश्च' (७) त्रिपदा पिपीलिकमध्या निचृद् गायत्री। 'ब्रह्म च' (९), 'क्रोधो वृक्कौ' (१३) साम्नां गायत्र्याविति[2] ॥२०॥

'धाता च' (१०) इति पुर उष्णिक्। 'चेतो हृदयम्' (११), 'क्षुत् कुक्षिः' (१२), 'रक्षांसि लोहितम्' (१७), 'एतद् वै' (२५) साम्न्युष्णिहः। 'अभ्रं पीवः' (१८), 'तृणानि प्राप्तः' (२२) एकपदासुरीजगत्यौ। 'अग्निरासीनः' (१९) एकपदाऽऽसुरी पङ्क्तिः। 'इन्द्रः प्राङ् तिष्ठन्' (२०) याजुषी जगती। 'प्रत्यङ् तिष्ठन्' (२१) आसुर्यनुष्टुप्। 'मित्र ईक्षमाणः' (२३) एकपदाऽऽसुरी बृहती। 'युज्यमानः' (२४) साम्नां भुरिग् बृहती। 'उपैनम्' (२६) साम्नी त्रिष्टुप्। इहानुक्तपादा द्विपदा इति ॥२१॥

'शीर्षक्तिं शीर्षामयम्' (९,१३[८]) इति द्वाविंशकम्। भृग्वङ्गिराः। आनुष्टुभम्[3]। अनेन सर्वशीर्षाद्यामयमपाकरोत्[4]।

'उदरात् ते' (१२) इत्यनुष्टुब्गर्भा ककुम्मती चतुष्पादुष्णिक्। 'याः पार्श्वे' (१५) इति विराडनुष्टुप्। 'पादाभ्यां ते' (२१) इति विराट् पथ्या बृहती। 'सं ते शीर्ष्णः' (२२) इति पथ्या पङ्क्तिः।

'अस्य वामस्य' (९,१४[९]) इति द्वाविंशकं वामीयं ब्रह्मा आदित्यदेवत्यं[5] त्रैष्टुभमध्यात्मपरम्[6]।

'पञ्चपादम्' (१२), 'सनेमि' (१४), 'साकं जानाम्' (१६), 'अवः परेण पितरम्' (१८) इति जगत्यः।

---

१. एकः (=पर्यायः) तु. द्वि. २. गायत्र्यौ भा[1]. ३. अनुष्टुब् भा[1] बी. ४. सार्वशीर्षामयाद्यामयमपा° भा[1]; सार्वशीर्षामयामयपा° भा[4]; सर्वशीर्षामयाद्यामयमुपा° लं; सर्वशीर्षामयामयद्यामयमपा° बी. ५. °ह्मादितिदे° लं. ६. °त्मकम् बी; °त्मकरम् भा[1 ४-५] लं.

'यद् गायत्रे' (९,१५[१०]) इत्यष्टाविंशकं गोविराडध्यात्मदेवत्यं त्रैष्टुभम्।

आद्या (१), 'अयं सः' (७), इयं वेदिः' (१४), 'सप्तार्धगर्भा' इति द्वे (१७-१८) जगत्यः। 'गौरित्'[1] (२१) इति पञ्चपदाऽतिशाकरी। तथा 'अपादेति' (२३) मैत्रावरुणी। 'विराड् वाक्' (२४) इति चतुष्पदा पुरस्कृतिर्भुरिग् अतिजगती। 'गायत्रेण प्रति' (२), 'त्रयः केशिनः' इति द्वे (२६-२७) भुरिजः इति ॥२२॥

इति ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां

षष्ठः पटलः समाप्तः[2] ॥

---




---

१. °रिन्मिमाय गु. २. संपूर्णः कं भा¹.

## अथ

# सप्तमं पटलम्

## अथर्ववेदे दशमं काण्डम्

'यां कल्पयन्ति' (१०,१) इति द्वात्रिंशत्। प्रत्यङ्गिरसः। कृत्यादूषणदेवत्यमानुष्टुभम्।

आद्या (१) महाबृहती। 'शीर्षण्वती' (२) इति विराण्नाम गायत्री। 'ये त्वा' (९) इति पथ्या पङ्क्तिः। 'देवैनसात्' (१२) इति पङ्क्तिः। 'यथा वातः, (१३) इत्युरोबृहतीति। 'अयं पन्थाः' (१५) इति चतुष्पदा विराड् जगती। 'वात इव' (१७), 'स्वायसा' (२०) इति प्रस्तारपङ्क्ती। द्वितीया (२०) विराट्। 'पराक् ते' (१६), 'यां ते बर्हिषि' (१८) इति त्रिष्टुभौ। 'उपाहृतम्' (१९) इति चतुष्पदा जगती। 'सोमो राजा' (२२) इत्येकावसाना द्विपदाऽऽर्ची उष्णिक्। 'भवाशर्वौ' (२३) इति त्रिपदा भुरिग् विषमा गायत्री। 'यथेयंथ' (२४) इति प्रस्तारपङ्क्तिः। 'एतद्धि' (२८) इति त्रिपदा गायत्री। 'अनागोहत्या' (२९) इति मध्ये-ज्योतिष्मती जगती। 'यथा सूर्यः' (३२) इति द्व्यनुष्टुब्गर्भा पञ्चपदाऽतिजगतीति ॥ १ ॥

'केन पार्ष्णी' (१०,२) इति त्रयस्त्रिंशत्। पार्ष्णीसूक्तम्। नारायणः। पौरुषमानुष्टुभम्।

आद्याश्चतस्रः (१-४), 'हिन्वोर्हि' इति द्वे (७-८) त्रिष्टुभः। 'कः सप्त खानि' (६), 'को अस्मिन्नापः' (११) इति जगत्यौ। 'ऊर्ध्वो नु सृष्टाः' (२८) इति भुरिग् बृहती। इदं ब्रह्मप्रकाशि सूक्तम्। 'अष्टाचक्रा' इति द्वे (३१-३२) साक्षात् परब्रह्मप्रकाशि-न्याविति।

'अयं मे वरणः' (१०,३) इति पञ्चविंशकम्। अथर्वा। मन्त्रोक्तवरणदेवत्यमुत वानस्पत्यं चान्द्रमसमानुष्टुभम्।

'प्रैणान् छृणीहि' इति द्वे (२-३), 'स्वप्नं सुप्त्वा' (६), इति भुरिक्त्रिष्टुभः। 'यन्मे माता' (८) इति पथ्या पङ्क्तिः। 'अयं मे वरण उरसि' (११), 'तांस्त्वम्' (१६) इति भुरिजौ। 'यथा वातो वनस्पतीन्' इति द्वे (१३-१४) पथ्यापङ्क्ती। 'यथा वातेन'[1] (१५) इति, 'यथा सूर्यः' (१७) इति प्रभृति 'यथा देवेष्वमृतम्' (२५) इत्यन्ताः षट्पदा दश (१५,१७-२५) जगत्य इति ॥२॥

'इन्द्रस्य प्रथमः' (१०,४) इति षड्विंशतिः। गरुत्मान्। तक्षकदैवतमानुष्टुभम्।

आद्या (१) पथ्या पङ्क्तिः। 'दर्भः शोचिः' (२) इति त्रिपदा यवमध्या गायत्री। 'अव श्वेत' इति द्वे (३-४) पथ्या-बृहत्यौ। 'संयतम्' (८) इत्युष्णिग्गर्भा परात्रिष्टुप्। 'नष्टासवः' (१२) इति भुरिग् गायत्री। 'इन्द्रो मेऽहिम्' (१६) इति त्रिपदा प्रतिष्ठा गायत्री। 'ओषधीनामहम्' (२१) इति ककुम्मती। 'ये अग्निजाः' (२३) इति त्रिष्टुप्। 'आरे अभूत्' (२६) इति त्र्यवसाना षट्पदा बृहतीगर्भा ककुम्मती भुरिक् त्रिष्टुबिति ॥३॥

'इन्द्रस्यौजः' (१०,५,१-२४) इति चतुर्विंशतिः। सिन्धुद्वीपः। आप्यमुत चान्द्रमसमानुष्टुभम्।

आद्याः पञ्च (१-५) त्रिपदाः पुरोऽभिकृतयः ककुम्मती-गर्भाः पङ्क्तयः। 'विश्वानि मा' (६) इति चतुष्पदा जगतीगर्भा जगती। 'अग्नेर्भाग स्थ' इत्यष्टौ (७-१४) त्र्यवसानाः पञ्चपदा विपरीतपादलक्ष्मा बृहत्यः। तत्र 'मित्रावरुणयोः' (११), 'देवस्य सवितुः' (१४) इति द्वे पथ्यापङ्क्ती। 'यो व आपोऽपां भागः' इति सप्त (१५-२१) चतुरवसाना दशपदा मन्त्रोक्तदेवत्यास्त्रैष्टुभगर्भा अतिधृतयः। तत्र 'हिरण्यगर्भः' (१९), 'अश्मा[2] पृश्निः' (२०) इति कृती। 'अरिप्रा आपः' (२४) इति त्रिपाद् विराड् गायत्री।

'विष्णोः क्रमोऽसि' इत्येकादश (१०,५,२५-३५ [६,१-११]) त्र्यवसानाः। कौशिकः। विष्णुक्रमदेवत्या उत प्रतिमन्त्रोक्तदेवत्याः षट्पदाः। यथाक्षरं शक्वर्यतिशक्वर्यौ।

१. वातः मूको. २. नास्ति भा[१] ४-५.

'जितमस्माकम्' (१०,५,३६ [७,१]) इति मार्त्यवी[1] पञ्चपदाऽतिशाक्वराऽतिजागतगर्भा अष्टिः ।

'सूर्यस्यावृतम्' इति पञ्च ( १०,५,३७-४१ [८,१-५] ) ब्रह्मा । प्रतिमन्त्रोक्तदेवत्याः । प्रथमा ( १०,५,३७ ) विराट् पुरस्ताद्बृहती । 'दिशो ज्योतिष्मतीः' ( १०,५,३८ ) इति पुरउष्णिक्[2] । 'सप्त ऋषीन्' ( १०,५,३९ ), 'ब्राह्मणान्' ( १०,५,४१ ) इति द्वे आर्षीगायत्र्यौ । 'ब्रह्माभ्यावर्ते' ( १०,५,४० ) इति विराड् विषमा गायत्री ॥ ४ ॥

'यं वयम्' इति नवर्चम् ( १०,५,४२-५० [९,१-९] ) । विहव्यः । प्राजापत्या अनुष्टुभः । 'राज्ञो वरुणस्य' ( १०,५,४४ ) इति त्रिपाद् गायत्रीगर्भा[3] अनुष्टुप् । 'अपामस्मै' ( १०,५,५० ) इति त्रिष्टुप् ।

'अरातीयोः' ( १०,६ ) इति पञ्चत्रिंशत् । बृहस्पतिः । मन्त्रोक्तफालमणिदेवत्यमुत वानस्पत्यमानुष्टुभम् ।

आद्या ( १ ), 'हिरण्यस्रक्' ( ४ ) इति गायत्र्यौ । 'यत्त्वा शिक्वः' ( ३ ) इत्याप्या । 'तस्मै[4] घृतम्' ( ५ ) इति षट्पदा जगती । 'यमबध्नात् बृहस्पतिर्मणिम्' ( ६ ) इति सप्तपदा[5] विराट् शक्वरी । 'तमिन्द्रः' इति चतस्रः ( ७-१० ) त्र्यवसाना अष्टपदा अष्टयः । अन्त्या ( १० ) नवपदा धृतिः । 'बृहस्पतिर्वाताय' ( ११ ) इति पथ्या पङ्क्तिः । 'तेनेमां मणिना कृषिम्' इति षट् ( १२-१७ ) त्र्यवसानाः षट्पदाः[6] शक्वर्यः । 'अथर्वाणो अबध्नत' ( २० ) इति पथ्या पङ्क्तिः । 'तं धाता' ( २१ ) इति गायत्री । 'अगमत् सह गोभिः' इति पञ्च (२३-२७) पथ्यापङ्क्तयः । 'उत्तरं द्विषतः' ( ३१ ) इति त्र्यवसाना षट्पदा जगती । 'एतमिध्मम्' (३५) इति पञ्चपदा त्र्यनुष्टुब्गर्भा जगतीति[7] ॥५॥

'कस्मिन्नङ्गे' (१०,७) इति चतुश्चत्वारिंशत् । अथर्वा क्षुद्रः । मन्त्रोक्तस्कम्भाध्यात्मदेवत्यं त्रैष्टुभम् ।

प्रथमा ( १ ) विराड् जगती । 'कस्मादङ्गाद् दीप्यते' ( २ ), 'यत्परममवमम्' ( ८ ) इति भुरिजौ । 'यस्मिन् स्तब्ध्वा' ( ७ ) इति

---

१. मार्त्वी मूको. २. पुरस्तादुष्णिक् भा[१]. ३. °गायत्रगर्भा भा[२],[४-५] लं बी. ४. अस्मै लं. ५. प्रथमा सप्त° मूको. ६. सप्तपदाः भा[१ ५]. ७. जगती भा[४] लं.

परोष्णिक् । 'यत्र लोकान्' (१०) इति उपरिष्टाद्बृहती । 'यत्र तपः' इति द्वे (११-१२), 'यत्रामृतं च' (१५), 'यस्माद्दचः' (२०) इति उपरिष्टाज्ज्योतिर्जगत्यः । 'यस्य त्रयस्त्रिंशद् देवा अङ्गे सर्वे' (१३) इति परोष्णिक् । 'यत्र ऋषयः' (१४), 'यस्य चतस्रः' (१६), 'यस्य शिरः' (१८) इति द्वे उपरिष्टाद्बृहत्यौ । 'ये पुरुषे' (१७) इति त्र्यवसाना षट्पदा जगती । 'असच्छाखाम्' (२१) इति बृहतीगर्भाऽनुष्टुप् । 'यत्रादित्याः' (२२) इति उपरिष्टाज्ज्योतिर्जगती । 'यस्य त्रयस्त्रिंशद्देवा निधिम्' इति अष्टौ (२३-३०) अनुष्टुभ इति[1] ॥६॥

'नाम नाम्ना' (३१) मध्येज्योतिर्जगती । 'यस्य भूमिः' (३२), 'यस्य वातः' (३४), 'यः श्रमात्' (३६) इति उपरिष्टाद्विराड्बृहत्यः । 'यस्य सूर्यः' (३३) इति [2]परविराड् अनुष्टुप्[2] । 'स्कम्भो दाधार' (३५) इति चतुष्पदा जगती । 'कथं वातः' (३७), 'अप तस्य' (४०) इति अनुष्टुभौ । 'महद्यक्षम्' (३८) इति त्रिष्टुप् । 'यस्मै हस्ताभ्याम्' (३९) इति उपरिष्टाज्ज्योतिर्जगती । 'यो वेतसम्' (४१) इति आर्षी त्रिपाद् गायत्री । 'तन्त्रमेके' इति द्वे (४२-४३) त्रिष्टुभौ । 'इमे मयूखाः' (४४) इति एकावसाना पञ्चपदा निचृत् पदपङ्क्तिः । आर्ची अनुष्टुब् द्विपदा वेति ॥७॥

'यो भूतम्' (१०,८) इति चतुश्चत्वारिंशत् । कुत्सः । अध्यात्मदेवत्यं त्रैष्टुभम् ।

आद्या (१) उपरिष्टाद्विराड् बृहती । 'स्कम्भेनेमे' (२) इति बृहतीगर्भा अनुष्टुप् । 'इदं सवितः' (५) इति भुरिग् अनुष्टुप् । 'आविः सन्निहितम्' (६) इति अनुष्टुप् । 'एकचक्रम्' (७) इति पराबृहती । 'या पुरस्तात्' (१०) इति अनुष्टुब्गर्भा । 'यदेजति' (११) इति जगती । 'अनन्तं विततम्' (१२) इति पुरोबृहती त्रिष्टुब्गर्भा आर्षी पङ्क्तिः । 'ऊर्ध्वं भरन्तम्' (१४), 'सत्येन' इति द्वे (१९-२०) अनुष्टुभः[3] । 'दूरे पूर्णेन' (१५) इति भुरिग् बृहती । 'अपादग्रे' (२१), 'सनातनम्' (२३), 'बालादेकम्' (२५), 'पूर्णात्

---

१. नास्ति भा[१ ५] लं. २-२. पराविॅ भा[४] बी; परानुष्टुप् लं.
३. अनुष्टुभौ भा[१ ४ ५] लं.

पूर्णम्' (२९) इति अनुष्टुभः। 'भोग्यः' (२२) इति पुरउष्णिक्। 'इयं कल्याणि' (२६) इति द्व्युष्णिग्गर्भा अनुष्टुप्। 'त्वं स्त्री' (२७) इति भुरिग् बृहती। 'एषा सनत्नी' (३०) इति भुरिक्। 'अविर्वै नाम' इति चतस्रः (३१-३४), 'यो विद्यात् सूत्रम्' इति द्वे (३७-३८), 'उत्तरेणेव' (४१), 'पुण्डरीकं नवद्वारम्' (४३) इति अनुष्टुभः। 'यदन्तरा द्यावापृथिवी' (३९) इति बृहतीगर्भा। 'निवेशनः' (४२) इति विराड् गायत्रीति[1] ॥८॥

'अघायताम्' (१०,९) इति सप्तविंशतिः। अथर्वा। मन्त्रोक्त-शतौदनादेवत्यमानुष्टुभम्[2]।

आद्या (१) त्रिष्टुप्। 'ये देवाः' (१२) इति पथ्या पङ्क्तिः। 'क्रोडौ ते स्ताम्' (२५) इति द्व्युष्णिग्गर्भाऽनुष्टुप्। 'उलूखले मुसले' (२६) इति पञ्चपदा बृहत्यनुष्टुबुष्णिग्गर्भा जगती। 'अपो देवीः' (२७) इति पञ्चपदा अतिजागतानुष्टुब्गर्भा शक्करी।

'नमस्ते जायमानायै' (१०,१०) इति चतुस्त्रिंशत्। कश्यपः। मन्त्रोक्तवशादेवत्यमानुष्टुभम्।

आद्या (१) ककुम्मती। 'शतं कंसाः' (५) इति पञ्चपदाऽति-जागतानुष्टुब्गर्भा[3] स्कन्धोग्रीवी बृहती। 'यज्ञपदीः' (६), 'अपस्त्वम्' (८), 'यदनूची' (१०) इति विराजः। 'सर्वे गर्भात्' (२३) इति बृहती। 'युध एकः' (२४) इति उपरिष्टाद्बृहती। 'वशामेव' (२६) इति आस्तारपङ्क्तिः। 'य एवं विद्यात्' (२७) इति शङ्कुमती। 'चतुर्धा रेतः' (२९) इति त्रिपदा[4] विराड् गायत्री। 'वशाया दुग्धं पीत्वा' (३१) इति उष्णिग्गर्भा। 'सोममेनाम्' (३२) इति विराट् पथ्या बृहतीति ॥ ९ ॥

---

१. नास्ति भा[४] लं. २. शतौदनदे° बी. ३. नास्ति लं; पञ्चपदा-तिजागतानुष्टुभम् बी भा[१ ४-५]. ४. त्रिपात् भा ४।

# अथर्ववेदे एकादशं काण्डम्

'अग्ने जायस्व' (११,१) सप्तत्रिंशत्। ब्रह्मा। ब्राह्मौदनिकं[1] त्रैष्टुभम्।

आद्या (१) अनुष्टुब्गर्भा भुरिक् पङ्क्तिः। 'कृणुत धूमम्' (२) इति बृहतीगर्भा विराट्। 'अग्ने जनिष्ठाः' (३) इति चतुष्पदा शाक्वरगर्भा जगती। 'समिद्धो अग्ने' (४) इति भुरिक्। 'त्रेधा भागः' (५) इति बृहतीगर्भा विराट्। 'अग्ने सहस्वान्' (६) इति उष्णिक्। 'इयं मही' (८) इति विराड् गायत्री। 'एतौ ग्रावाणौ' (९) इति [2]शाक्वरातिजागतगर्भा जगती[2]। 'गृहाण ग्रावाणौ' (१०) विराट्पुरोऽतिजगती विराड् जगती[3]। 'इयं ते धीतिः' (११) इति जगती। 'ऊर्जो भागः' इति द्वे (१५-१६) भुरिजौ। 'शुद्धाः पूताः' (१७) इति विराड् जगती। 'ब्रह्मणा शुद्धाः' (१८) इति अतिजागतगर्भा परातिजागता विराड् अतिजगती। 'सहस्रपृष्ठः' (२०) इति अतिजागतगर्भा परशाक्वरा[3] चतुष्पदा भुरिग् जगतीति ॥१०॥

'उदेहि वेदिम्' (२१) इति, 'अदितेर्हस्ताम्' इति तिस्रः (२४-२६), 'अग्नौ तुषान्' (२९) इति विराड्जगत्यः। अन्त्या (२९) भुरिक्। 'शुद्धाः पूताः' (२७) अतिजागतगर्भा जगती[4]। 'वभ्रेरध्वर्यो' (३१) इति भुरिक्। 'वृषभोऽसि' (३५) इति चतुष्पात् ककुम्मती उष्णिक्। 'समाचिनुष्व' (३६) इति पुरो विराट्। व्याघ्रादिष्ववगन्तव्या (?)। 'येन देवाः' (३७) इति विराड् जगती।

'भवाशर्वौ मृडतम्' (११,२) इत्येकत्रिंशत्। अथर्वा। मन्त्रोक्तरुद्रदैवतं त्रैष्टुभम्। या यद्देवत्येति पारिभाषिकमनुस्मार्यते[5] सर्वत्र।

आद्या (१) परातिजागता[6] विराड् जगती। 'शुने क्रोष्ट्रे' (२) इति अनुष्टुब्गर्भा पञ्चपदा तथा जगती। 'क्रन्दाय ते'

---

१. ब्रह्मौ° लं. २. °गर्भानुजगती भा[४]. ३. पराशाक्वरा भा[४] बी लं. ४. भुरिग्जगती बी. ५. °मनुस्मर्यते बी. ६. परातिजगती भा[१][४].

(३) इति चतुष्पात् स्वराड् उष्णिक्। 'पुरस्तात् ते' इति द्वे (४-५), 'अस्त्रा नीलशिखण्डेन' (७) इति अनुष्टुभः। 'अङ्गेभ्यस्ते' (६) इति आर्षी गायत्री। 'स नो भव' (८) इति महाबृहती। 'चतुर्नमः' (९) इति आर्षी। 'तव चतस्रः' (१०) इति पुरःकृतिः त्रिपदा विराड् इति।॥ ११॥

'उरुः कोशः' (११) इति पञ्चपदा विराड् जगतीगर्भा शक्वरी। 'धनुर्बिभर्षि' (१२) इति भुरिक्। 'योऽभियातः' (१३), 'नमस्ते' (१५) इति द्वे अनुष्टुभौ। 'भवारुद्रौ' (१४), 'सहस्राक्षमतिपश्यम्' इति तिस्रः (१७-१९) विराड्गायत्र्यः। 'मा नो हिंसीः' (२०) इति भुरिग् गायत्री। 'मा नो गोषु' (२१) इति अनुष्टुप्। 'यस्य तक्मा' (२२) इति विषमपादलक्ष्मा[1] त्रिपदा महाबृहती। 'योऽन्तरिक्षे' (२३), 'मा नो रुद्र' इति द्वे (२६-२७) विराड्गायत्र्यः। 'मा नो महान्तम्' (२९), 'तुभ्यमारण्याः' (२४) इति जगत्यौ। 'शिंशुमाराः' (२५) इति[2] पञ्चपदाऽतिशक्वरी। 'रुद्रस्यैलबकारेभ्यः' (३०) इति चतुष्पादुष्णिक्। 'नमस्ते घोषिणीभ्यः' (३१) इति त्र्यवसाना विपरीतपादलक्ष्मा[3] "षट्पाद् जगती"[4] ॥ १२॥

'तस्यौदनस्य' इति त्रयः (११,३-५) पर्यायाः। तत्र पूर्वम् (११,३ [३,१]) एकत्रिंशद् बार्हस्पत्यौदनदेवत्यम्[5]।

आद्या (१), 'ऋचा कुम्भी' (१४) इति आसुरीगायत्र्यौ। 'द्यावापृथिवी श्रोत्रे' (२) इति त्रिपदा समविषमा गायत्री। 'चक्षुर्मुसलम्' (३), 'कम्बु फलीकरणाः' (६), 'आन्त्राणि' (१०) इति आसुरीपङ्क्तयः। 'दितिः शूर्पम्' (४), 'त्रपु भस्म' (८) साम्न्यनुष्टुभौ। 'अश्वाः कणाः' (५), 'ऋतं हस्तावनेजनम्' (१३), 'ब्रह्मणा परिगृहीता' (१५), 'यावद् दाता' (२५) साम्न्युष्णिहः'। 'श्याममयः' (७), 'ओदनेन' इति चतस्रः (१९-२२) प्राजापत्यानुष्टुभः। 'खलः पात्रम्' (९), 'ऋतवः' इति द्वे (१७-१८) आसुर्यनुष्टुभः। 'इयमेव पृथिवी' (११) इति भुरिग् आर्ची अनुष्टुप्। 'सीताः पर्शवः' (१२)

---

१. °दलक्ष्म्या भा[५] लं. विषमा पादलक्ष्मा भा[१ ४]. २. इति द्वे भा[१ ४-५] गु. ३. °लक्ष्म्या लं. ४-४. षट्पादिति मूको. ५. °नदेवत्याः मूको.

इति याजुषी जगती। 'बृहदायवनम्' (१६), 'स य ओदनस्य' (२३) इति आसुरीबृहत्यौ। 'नाल्पः' (२४) इति त्रिपदा प्राजापत्या बृहती। ब्रह्मवादिनः' (२६) इति आर्च्युष्णिक्। 'त्वमोदनम्' (२७) इति [1]साम्नी गायत्री। 'पराश्वम्' इति द्वे[1] (२८-२९) साम्नीबृहत्यौ। द्वितीया (२९) भुरिक्। 'नैव' (३०) इति याजुषी त्रिष्टुप्। 'ओदन एव' (३१) अल्पशः पङ्क्तिः। उत याजुषीति ॥१३॥

'ततश्चैनम्' (११,४ [३,२ [३२-४९]]) द्वासप्ततिः। मन्त्रोक्तदेवत्याः।

प्रथमा[2] (१$^{१}$) 'सर्वाङ्ग एव' (१$^{७}$-१८$^{७}$), 'एनमन्यैः प्राणापानैः' (७$^{१}$), 'अन्येनोरसा' (१०$^{१}$), इति च साम्नीत्रिष्टुभः। 'ज्येष्ठतः' (१$^{२}$), 'तं वा अहम्' (१$^{३}$-१८$^{३}$), 'ताभ्यामेनम्' (२$^{५}$-३$^{५}$;१३$^{५}$-१७$^{५}$), 'मुखतस्ते' (४$^{२}$), 'उदरदारः' (११$^{२}$) [3]एकपदा आसुरीगायत्र्यः[3]। 'बृहस्पतिना' (१$^{४}$), 'समुद्रेण' (१२$^{४}$) दैवीजगत्यौ। 'तैनेनम्' (१$^{५}$;४$^{५}$;८$^{५}$-१२$^{५}$); 'तयैनम्' (५$^{५}$;१८$^{५}$); 'तैरेनम्' (६$^{५}$-७$^{५}$), 'प्राणापानस्त्वा' (७$^{२}$), 'ऊरू ते' (१३$^{२}$), 'बहुचारी' (१५$^{२}$) एकपदा आसुर्यनुष्टुभः। 'एष वा ओदनः' (१$^{६}$-१८$^{६}$) साम्नी अनुष्टुप्। 'एनमन्याभ्यां श्रोत्राभ्याम्' इत्यादितः सप्तदश (२$^{१}$-१८$^{४}$) आर्च्यनुष्टुभः। 'ततश्चैनमन्यैर्दन्तैः'[4] (६$^{१}$) इति साम्नी पङ्क्तिः। 'बधिरो भविष्यसि' (२$^{२}$), 'जिह्वा ते' (५$^{२}$), 'विद्युत् त्वा' (९$^{२}$), 'सर्पस्त्वा' (१६$^{२}$), ब्राह्मणं हनिष्यसि' (१७$^{२}$) इत्यासुरीजगत्यः। 'अन्धो भविष्यसि' (३$^{२}$), 'दन्तास्ते' (६$^{२}$), कृष्या न रात्स्यसि' (१०$^{२}$), 'अप्सु मरिष्यसि' (१२$^{२}$), 'ग्रामो भविष्यसि' (१४$^{२}$) इत्यासुरीपङ्क्तयः। 'सूर्याचन्द्रमसाभ्याम्' (३$^{४}$) इति[5] आसुरी त्रिष्टुप्। 'ब्रह्मणा मुखेन' (४$^{४}$), 'अश्विनोः पादाभ्याम्' (१५$^{४}$), 'ऋतस्य हस्ताभ्याम्' (१७$^{४}$) इति याजुषीगायत्र्यः। 'अग्नेर्जिह्वया' (५$^{४}$), 'ऋतुभिर्दन्तैः' (६$^{४}$), 'दिवा पृष्ठेन' (९$^{४}$) इति दैवीपङ्क्तयः। 'सप्तर्षिभिः प्राणापानैः' (७$^{४}$), 'अन्तरिक्षेण व्यचसा' (८$^{४}$) इति प्राजापत्यागायत्र्यः। 'राजयक्ष्मस्त्वा' (८$^{२}$) आसुरी उष्णिक्। 'पृथिव्योरसा' (१०$^{४}$), 'सवितुः प्रपदाभ्याम्' (१६$^{४}$) दैवीजगत्यौ। 'सत्येनोदरेण' (११$^{४}$), 'त्वष्टुरष्ठीवद्भ्याम्' (१४$^{४}$) 'सत्ये प्रतिष्ठाय' (१८$^{४}$)

---

१-१. नास्ति मूको. २. अत्र मन्त्रसंख्याशीर्षस्था संख्याऽवसानचं सूचयति। ३-३. एकपदासुरी मूको. ४. तत्रैनम° भा$^{१}$ $^{४५}$. ५. नास्ति भा$^{४}$ लं बी.

इति दैवीत्रिष्टुभः। 'अप्रतिष्ठानः' (१८[२]) एकपदा भुरिक् साम्नी बृहतीति।

यदैते पर्यायसूक्तमन्त्रा जपकर्मणि प्रयुज्यन्ते तदाऽधिकारान्तान्[१] (?) एतान् विजानीयात्, तदा तथाछन्दस्येता (?) अष्टादश दण्डका भवन्ति। 'सोदक्रामत्, 'य एवं वेद'[२] (८, ११-१५) इत्यादिषु यथाक्षरं तथातथम-विकारान्तं[३] गायत्र्यादि कृतिधृतिपथ्यापङ्क्त्यादि छन्दः प्रयुञ्ज्यादिति ॥१४॥

'एतद्वै ब्रध्नस्य' (११,५[३,[३],५०-५६]) इति सप्तको मन्त्रोक्त-देवत्यः।

तत्र आद्या (१) आसुरी अनुष्टुप्। 'ब्रध्नलोकः' (२) इति आर्च्युष्णिक्। 'एतस्माद् वै' (३) इति त्रिपदा भुरिक् साम्नी [४]त्रिष्टुप्। 'तेषां प्रज्ञानाय' (४) इत्यासुरी बृहती। 'स य एवं विदुषः' (५) इति द्विपदा भुरिक् साम्नी[४] बृहती। 'न च प्राणम्' (६) इति साम्नी उष्णिक्। 'न च सर्वज्यानिम्' (७) इति प्राजापत्या बृहती।

'प्राणाय नमः' (११,६[४]) इति षड्विंशकम्। भार्गवो वैदर्भिः। मन्त्रोक्तप्राणदेवत्यमानुष्टुभम्।

आद्या (१) शङ्कुमती। 'नमस्ते प्राण प्राणते' (८) इति पथ्या पङ्क्तिः। 'अपानतिं' (१४) इति निचृत्। 'प्राणमाहुः' (१५) इति भुरिक्। 'अन्तर्गर्भः' (२०) इति अनुष्टुब्गर्भा त्रिष्टुप्। 'एकं पादम्' (२१) इति मध्येज्योतिर्जगती। 'अष्टाचक्रम्' (२२) इति त्रिष्टुप्। 'प्राण मा मत्' (२६) इति बृहतीगर्भेति ॥१५॥

'ब्रह्मचारीष्णन्' (११,७[५]) इति षड्विंशकम्। ब्रह्मा। मन्त्रोक्तब्रह्मचारिदेवत्यं[५] त्रैष्टुभम्।

आद्या (१) पुरोऽतिजागतविराड्गर्भा। 'ब्रह्मचारिणं पितरः' (२) इति पञ्चपदा बृहतीगर्भा [५]विराट् शाकरी। परा (३) उरोबृहती। 'ब्रह्मचार्येति समिधा' (६) इति शाकरगर्भा[५] चतुष्पदा जगती। 'ब्रह्मचारी जनयन्' (७) इति विराड्गर्भा। 'आचार्यस्ततक्ष'

---

१. °धिकारांतातान् भा[१]. २. विद्वान् मूको. ३. यथातथामधिका° भा[२] बी; यथा तथाधिका° भा[४-५]. ४-४. नास्ति ळं. ५. °दैवत्यम् भा[१].

(८) इति पुरोऽतिजागता विराड् जगती। 'इमां भूमिम्' (९) इति बृहतीगर्भा। 'अर्वागन्यः परः' (१०) इति भुरिक्। 'अर्वागन्य इतः' (११) इति जगती। 'अभिक्रन्दन्' (१२) इति शाक्करगर्भा[१] चतुष्पाद् विराडतिजगती। 'अग्नौ सूर्ये' (१३) इति जगती। 'अमा घृतम्' (१५) इति पुरस्ताज्ज्योतिः। 'आचार्यो मृत्युर्वरुणः' (१४), 'आचार्यो ब्रह्मचारी' इति सप्त (१६-२२) अनुष्टुभः। 'देवानामेतत्' (२३) इति पुरोबार्हताऽतिजागतगर्भा। 'चक्षुः श्रोत्रम्' (२५) इति एकावसानाऽऽर्च्युष्णिक्। 'तानि कल्पत्' (२६) इति मध्येज्योतिरुष्णिग्गर्भा।

'अग्निं ब्रूमः' (११,८ [६]) इति त्रयोविंशकम्। शन्तातिः। चान्द्रमसमुत मन्त्रोक्तदेवत्यमानुष्टुभम्। 'यन्मातली रथक्रीतम्' (२३) इति बृहतीगर्भा इति ॥१६॥

'उच्छिष्टे नाम रूपम्' (११,९ [७]) इति सप्तविंशतिः। अथर्वा मन्त्रोक्तोच्छिष्टाध्यात्मदैवतमानुष्टुभम्।

'ऐन्द्राग्नं पावमानम्'[२] (६) इति पुरउष्णिग्[३] बार्हतपरा। 'शर्कराः सिकताः' (२१) इति स्वराट्। 'राद्धिः प्राप्तिः' (२२) विराट् पथ्या बृहती।

'यन्मन्युः' (११,१० [८]) इति चतुस्त्रिंशत्। कौरुपथिः। अध्यात्ममन्युदैवतमानुष्टुभम्। 'प्रथमेन प्रमारेण' (३३) इति पथ्या पङ्क्तिः।

'ये बाहवः' (११,११ [९]) इति षड्विंशकम्। काङ्कायनः। मन्त्रोक्तार्बुदिदेवत्यमानुष्टुभम्।

आद्या (१) सप्तपदा विराट् शाक्करी त्र्यवसाना। 'उत्तिष्ठतमा रभेथाम्' (३) इति परोष्णिक्। 'अर्बुदिर्नाम' (४) इति त्र्यवसानोष्णिग्बृहतीगर्भा परात्रिष्टुप् षट्पदाऽतिजगती। 'अलिक्लवा जाष्कमदाः' (९), 'आ गृह्णीतम्' (११), 'प्रतिघ्नानाः सम्' (१४) इति पथ्यापङ्क्तयः। 'श्वन्वतीः' (१५) इति सप्तपदा त्र्यवसाना शाक्करी। 'खड्रेऽधिचङ्क्रमाम्' (१६) इति त्र्यवसाना

---

१. शाक्करगर्भा परा भा[२] लं बी. २. पवमानम् भा[१]. ३. पुरोष्णिक् भा[१] [२] लं बी; परोष्णिक् भा[१].

पञ्चपदा[1] विराड् उपरिष्टाज्ज्योतिः त्रिष्टुप् । 'चतुर्दंष्ट्रान्' (१७) इति त्रिपदा गायत्री । 'ये च धीराः' (२२) इति त्र्यवसाना सप्तपदा शक्वरी । 'अर्बुदिश्च त्रिषन्धिः' (२३) इति पथ्या पङ्क्तिः । 'वनस्पतीन् वानस्पत्यान्' इति द्वे (२४-२५) त्र्यवसाने सप्तपदे शक्वर्यौ । 'तेषां सर्वेषाम्' (२६) इति पथ्या पङ्क्तिः ॥१७॥

'उत्तिष्ठत सं नह्यध्वमुदाराः' (११,१२ [१०]) इति सप्तविंशतिः । भृग्वङ्गिराः । मन्त्रोक्तत्रिषन्धिदेवत्यमानुष्टुभम् ।

आद्या (१) विराट् पथ्या बृहती । 'ईशां वो वेद राज्यम्' (२) इति त्र्यवसाना षट्पदा त्रिष्टुब्गर्भाऽतिजगती । 'अयोमुखाः सूचीमुखाः' (३) इति विराडास्तारपङ्क्तिः । 'अन्तर्धेहि' (४) इति विराट् । 'अवायन्ताम्' (८) इति[2] विराट् त्रिष्टुप् । 'यामिन्द्रेण' (९) इति पुरोविराट् पुरस्ताज्ज्योतिः त्रिष्टुप् । 'सर्वाँल्लोकान्' (१२) इति पञ्चपदा पथ्या पङ्क्तिः । 'बृहस्पतिराङ्गिरसः' (१३) इति षट्पदा जगती । 'वायुरमित्राणाम्' (१६) त्र्यवसाना षट्पदा ककुम्मत्यनुष्टुप्त्रिष्टुब्गर्भा[3] शक्वरी । 'यदि प्रेयुः' (१७) पथ्या पङ्क्तिः । 'मूढा अमित्राः' (२१) त्रिपदा गायत्री । 'यश्च कवची' (२२) विराट् पुरस्ताद्बृहती[4] । 'सहस्रकुणपा' (२५) ककुप् । 'मर्माविधम्' (२६) प्रस्तारपङ्क्तिरिति ॥१८॥

इति श्रीब्रह्मवेदोक्तमन्त्राणां[5] बृहत्सर्वानुक्रमणिकायां
सप्तमः[6] पटलः[7] समाप्तः[8] ॥

---

१. नास्ति लं. २. नास्ति भा[1]. ३. ककुम्मत्यनुष्गर्भा बी. ४. °बृहतीति लं. ५. इति ब्रह्मवेदो° भा[1]. ६. नास्ति भा[1]. ७. नास्ति भा[1]. ८. संपूर्णसप्तामिति भा[1] बी.

अथ

# अष्टमं पटलम्

## अथर्ववेदे द्वादशं काण्डम्

'एवं षट्त्रिंशदर्थसूक्तानि अथर्ववेदसंहितायामिति[1] । अथानुवाका[2] उच्यन्ते । 'सत्यं बृहत्' (१२,१) इति त्रिषष्टिः । अथर्वा । भौमं त्रैष्टुभम् ।

'असंबाधम्' (२) इति भुरिक् । 'यस्याश्चतस्रः' इति तिस्रः (४-६), 'यामश्विनौ' (१०) इति त्र्यवसानाः षट्पदा जगत्यः । 'यां रक्षन्ति' (७) इति प्रस्तारपङ्क्तिः । 'याऽर्णवेऽधि' (८), 'गिरयस्ते' (११) इति त्र्यवसाने षट्पदे विराडष्टी । 'यस्यामापः' (९) परानुष्टुप् । 'यत् ते मध्यम्' इति द्वे (१२-१३), 'त्वज्जाताः' (१५) इति शक्वर्यः । पूर्वे द्वे (१२-१३) त्र्यवसाने । तिस्रः (१२-१३,१५) अपि पञ्चपदाः । 'यो नो द्वेषत्' (१४) इति महाबृहती । 'ता[3] नः प्रजाः' (१६) इति साम्नी त्रिष्टुप् । 'महत् सधस्थम्' (१८) इति त्र्यवसाना षट्पदा त्रिष्टुबनुष्टुब्गर्भाऽतिशक्वरी । 'अग्निर्भूम्याम्' इति द्वे (१९-२०) उरोबृहत्यौ[4] । द्वितीया (२०) विराडिति ॥ १ ॥

'अग्निवासाः' (२१) इति साम्नी त्रिष्टुप् । प्रागुक्ता 'ता नः' (१६) इति चोभे एकावसाने । 'भूम्यां देवेभ्यः' (२२) इति त्र्यवसाना षट्पदा । 'यस्ते गन्धः पृथिवि' (२३) इति पञ्चपदा[5] । उभे विराडतिजगत्यौ । [6]'यस्ते गन्धः पुष्करम्' (२४) इति षट्पदा अनुष्टुब्गर्भा जगती[6] । 'यस्ते गन्धः पुरुषेषु' (२५) इति त्र्यवसाना सप्तपदा उष्णिगनुष्टुब्गर्भा शक्वरी । 'शिला भूमिः' इति तिस्रः (२६-२८) अनुष्टुभः । 'शुद्धा न आपः' (३०) इति विराड् गायत्री । 'मा नः पश्चात्' (३२) इति पुरस्ताज्ज्योतिः । 'यावत् ते' (३३), 'यत् ते भूमे' (३५), 'यस्यां पूर्वे भूतकृतः' इति तिस्रः (३९-४१) अनुष्टुभः ।

---

१-१. सप्तमपटलान्ते मूको. २. श्रीगणेशाय नमः । अथा° गु. ३. एताः मूको. ४. पुरोबृहत्यौ बी. ५. पञ्चपदे भा[7] गु. ६-६. नास्ति भा[7]. ७. नास्ति मा[7] बी.

'यच्छयानः' ( ३४ ) इति त्र्यवसाना षट्पदा त्रिष्टुब् बृहतीगर्भाऽतिजगती। 'ग्रीष्मस्ते' ( ३६ ) इति विपरीतपादलक्ष्मा पङ्क्तिः। 'याप सर्पम्' ( ३७ ) इति पञ्चपदा त्र्यवसाना शक्वरी। 'यस्यां सदोहविर्धाने'[1] ( ३८ ) इति त्र्यवसाना षट्पदा जगती। 'यस्यां गायन्ति' ( ४१ ) इति त्र्यवसाना षट्पदा[2] ककुम्मती शक्वरी। 'यस्यामन्नम्' ( ४२ ) इति स्वराडनुष्टुप् ॥ २ ॥

'यस्याः पुरः' ( ४३ ) इति विराडास्तारपङ्क्तिः। 'निधिं बिभ्रती' इति द्वे ( ४४-४५ ), 'ये त आरण्याः' ( ४९ ) इति जगत्यः। 'यस्ते सर्पः ( ४६ ) इति षट्पदाऽनुष्टुब्गर्भा पराशक्वरी। 'ये ते पन्थानः' ( ४७ ) इति षट्पदोष्णिगनुष्टुब्गर्भा परातिशक्वरी[3]। 'मल्वं बिभ्रती' ( ४८ ) इति पुरोऽनुष्टुप्। 'ये गन्धर्वाः' ( ५० ) इत्यनुष्टुप्। 'यां द्विपादः' ( ५१ ) इति त्र्यवसाना षट्पदाऽनुष्टुब्गर्भा ककुम्मती शक्वरी। 'यस्यां कृष्णम्' ( ५२ ) इति पञ्चपदाऽनुष्टुब्गर्भा परातिजगती। 'द्यौश्च मे' इति द्वे ( ५३-५४ ), 'ये ग्रामाः' ( ५६ ), 'शन्तिवा' ( ५९ ), 'भूमे मातः' ( ६३ ) इति अनुष्टुभः। पूर्वा ( ५३ ) पुरोबार्हता। 'अश्व इव' ( ५७ ) इति पुरोतिजागता[4] जगती। 'यद् वदामि' ( ५८ ) इति पुरस्ताद्बृहती। 'त्वमस्य' ( ६१ ) इति पुरोबार्हता। 'उपस्थास्ते' ( ६२ ) इति पराविराट् ॥ ३ ॥

'नडमा रोह' ( १२,२ ) इति पञ्चपञ्चाशत्। भृगुः। आग्नेयमुत मन्त्रोक्तदेवत्यं त्रैष्टुभम्।

'अघशंसदुःशंसाभ्याम्' ( २ ), 'यत् त्वा क्रुद्धाः' ( ५ ) इत्यनुष्टुभौ। 'निरितः' (३) इत्यास्तारपङ्क्तिः। 'पुनस्त्वादित्याः' ( ६ ) इति भुरिगार्षी पङ्क्तिः। 'यो अग्निः क्रव्यात्' ( ७ ) इति जगती। 'क्रव्यादमग्निं प्र हिणोमि' ( ८ ) इति भुरिक्। 'अग्निमिषतः'[5] ( ९ ) इत्यनुष्टुब्गर्भा विपरीतपादलक्ष्मा पङ्क्तिः ॥४॥

'देवो अग्निः' इति नव (१२-२०) अनुष्टुभः। तत्र 'अन्येभ्यस्त्वा'

---

१. सदः मूको. २. सप्तपदा भा[१]-[५] बी. ३. पराशक्वरी भा[४].
४. पुरोऽति जगती लं; नास्ति भा[१], [४]-[५] बी. ५. नास्ति भा[४].

( १६ ) इति ककुम्मती पराबृहती। 'समिद्धो अग्न आहुत' ( १८ ) इति निचृत्। 'परं मृत्यो' इति त्रयोदश ( २१-३३ ) मार्त्यव्यः। 'अपावृत्य' इति तिस्रः ( ३४-३६ ), 'मुहुर्गृध्यैः' इति चतस्रः (३८-४१) अनुष्टुभः। 'अयज्ञियो हतवर्चाः' ( ३७ ) इति पुरस्ताद्बृहती। 'यद् रिप्रम्' ( ४० ) इति पुरस्तात्ककुम्मती अनुष्टुप्। 'अग्ने अक्रव्यात्' ( ४२ ) इति त्रिपदैकावसाना[1] भुरिग् आर्ची गायत्री। 'इमं क्रव्यात्' ( ४३ ) इत्यनुष्टुप्। 'अन्तर्धिः' ( ४४ ) इति एकावसाना द्विपदा आर्ची बृहती। 'जीवानामायुः' ( ४५ ) इति जगती। 'सर्वानग्ने' ( ४६ ) इति एकावसाना द्विपदा साम्नी त्रिष्टुप्। 'इममिन्द्रम्' ( ४७ ) इति पञ्चपदा बार्हतवैराजगर्भा जगती। 'अनड्वाहम्' इति द्वे ( ४८-४९ ) भुरिजौ। 'ते देवेभ्यः' ( ५० ) इति उपरिष्टाद्विराड् बृहती। 'येऽश्रद्धाः' ( ५१ ), 'इषीकाम्' ( ५४ ) इत्यनुष्टुभौ। 'प्रेव' ( ५२ ) इति पुरस्ताद्-विराड् बृहती। 'प्रत्यञ्चमर्कम्' ( ५५ ) इति बृहतीगर्भेति ॥५॥

'पुमान् पुंसः' ( १२, ३ ) इति षष्टिः। यमः। मन्त्रोक्तस्वर्गौ-दनाग्निदेवत्यं त्रैष्टुभम्।

आद्या ( १ ) भुरिक्। 'पितेव पुत्रान्' ( १२ ) इति जगती। 'यद् यत् कृष्णः' ( १३ ) [2]इति, अथ[2] 'स्वर्गं लोकम्' ( १७ ) इति स्वराडार्षी-पङ्क्ती[3]। 'पृथग् रूपाणि' इति द्वे ( २१-२२ ), 'दक्षिणां दिशम्' ( ८ ), 'अग्निः पचन्' ( २४ ) इति जगत्यः। 'षष्ट्यां शरत्सु' ( ३४ ) इति विराड्गर्भा। 'यद् यज्जाया' (३९) इति अनुष्टुब्गर्भा। 'निधिं निधिपाः' इति द्वे ( ४२-४३ ) भुरिजौ। 'आदित्येभ्यो अङ्गिरोभ्यः' ( ४४ ) इति पराबृहती। 'अहं पचामि' ( ४७ ) इति भुरिक्। 'प्राच्यै त्वा दिशे' इति षट् (५५-६०) त्र्यवसानाः सप्तपदाः शङ्कुमत्योऽतिजागतशाक्वराति-शाक्वरधार्त्यगर्भा[4] अतिधृतयः। प्रथमा ( ५५ ), 'प्रतीच्यै त्वा' ( ५७ ), 'उदीच्यै त्वा' (५८), 'ऊर्ध्वायै त्वा' ( ६० ) इति [5]कृतयः। 'दक्षिणायै त्वा' ( ५६ ) विराट्[5] कृतिः। 'ध्रुवायै त्वा' ( ५९ ) कृतिरिति ॥६॥

'ददामि' ( १२,४ ) इति त्रिपञ्चाशत्। कश्यपः। मन्त्रोक्त-वशादेवत्यमानुष्टुभम्।

---

१. 'त्रिपादेका' भा[१]. २-२. इत्याथा मूको. ३. पङ्क्तिः मूको. ४. 'तिजागतशाक्वरधा' कं; 'शाक्वरगर्भा भा[१]. ५-५. नास्ति भा[१] [४-५] बी.

'यदस्याः कस्मै चित्' (७) इति भुरिक्। 'देवा वशामयाचन् मुखम्' (२०) इति विराट्। 'स्वधाकारेण पितृभ्यः' (३२) इति उष्णिग् बृहतीगर्भा। 'तां देवाः' (४२) इति बृहतीगर्भा। एवं सर्वत्र न्यूनाधिकत्वे समूह्यं यथायथम्। इति चत्वारोऽनुवाका इति ॥ ७ ॥

'श्रमेण तपसा' इति सप्त (१२,५-११) पर्यायाः प्रागुक्तर्षिः[1]। ब्रह्मगवीदेवत्याः[2]।

तत्र आद्यः (१२,५ [५,[१], १-६]) षट्। प्रथमा (१) [3]'अप क्रामति' (६) इति उभौ प्राजापत्यानुष्टुभौ[3]। 'सत्येनावृता' (२) इति भुरिक् साम्न्यनुष्टुप्। 'स्वधया परिहिता' (३) इति चतुष्पात् स्वराडुष्णिक्। 'ब्रह्म पदवायम्' (४) इति आसुर्यनुष्टुप्। 'तामाददानस्य' (५) इति साम्नी पङ्क्तिः।

'ओजश्च' (१२,६ [५,[२], ७-११]) इति पञ्च। आद्या (१) [4]'ब्रह्म च क्षत्रं च' इति[4] द्वे (२-३) आर्च्यनुष्टुभः[5]। पूर्वा (१) भुरिक्। 'पयश्च' (४) इत्युष्णिक्। एताश्चतस्रः (१-४) पुनःपुनः[6] पदान्तरेण[7] पदाभ्यासादेकपदाः[8]। 'तानि सर्वाणि' (५) इति आर्ची निचृत् पङ्क्तिरिति ॥ ८ ॥

'सैषा भीमा' (१२,७ [५,[३], १२-२७]) इति षोडश। प्रथमा (१) विराड्विषमा गायत्री। 'सर्वाण्यस्यां घोराणि' (२) इत्यासुरी अनुष्टुप्। 'सर्वाण्यस्यां क्रूराणि' (३), 'अघविषा निपतन्ती' (१५) इति द्वे साम्न्युष्णिहौ। 'सा ब्रह्मज्यम्' (४) इति गायत्री। 'मेनिः शतवधा' द्वे (५-६), 'हेतिः शफान्' इति द्वे (८-९) प्राजापत्यानुष्टुभः। 'वज्रो धावन्ती' (७) इति[9] याजुषी जगती। 'मृत्युर्हिङ्कृण्वती' (१०) साम्न्यनुष्टुप्। 'सर्वज्यानिः' (११) साम्नी बृहती। 'मेनिर्दुह्यमाना' (१२) याजुषी त्रिष्टुप्। 'सेदिरुपतिष्ठन्ती' (१३) इति आसुरी गायत्री। 'शरव्या मुखे' (१४) इति साम्न्यनुष्टुप्। 'अनुगच्छन्ती प्राणान्' (१६) आर्च्युष्णिगिति ॥ ९ ॥

---

१. नास्ति भा[२] लं.　२. °वीदेवताः मूको.　३-३. प्रथमोभौ प्राजापत्यानुष्टुबपक्रामतीति मूको.　४-४. नास्ति भा[१ ४ ५] बी.　५. अनुष्टुभौ भा[१ ४-५].　६. नास्ति लं.　७. पादान्तरेण बी ह्वि.　८. पादाभ्यासात् भा[१] बी.　९. नास्ति भा[१].

'वैरं विकृत्यमाना' (१२,८ [५,[४], २८-३८]) इत्येकादश। आद्या (१) आसुरी गायत्री। 'देवहेतिः' (२), 'अवर्तिरश्यमाना' (१०) आसुर्यनुष्टुभौ। 'पाप्माधिधीयमाना' (३) साम्न्यनुष्टुप्। 'विषं प्रयस्यन्ती' (४) याजुषी त्रिष्टुप्। 'अघं पच्यमाना' (५) साम्नी गायत्री। 'मूलबर्हणी' इति द्वे (६-७) साम्नीबृहत्यौ। 'अभूतिरुपह्रियमाणा' (८) भुरिग् साम्नी अनुष्टुप्। 'शर्वः क्रुद्धः' (९) इति साम्न्युष्णिक्। 'अशिता[1] लोकात्[2]' (११) प्रतिष्ठा गायत्री।

'तस्या आहननम्' (१२,९ [५,[५], ३९-४६]) इत्यष्ट। आद्या (१) साम्नी पङ्क्तिः। 'अस्वगता' (२) याजुष्यनुष्टुप्। [3]'अग्निः क्रव्याद् भूत्वा' (३), 'य एवं विदुषः[3]' (८) भुरिक्साम्न्यनुष्टुभौ। 'सर्वास्याङ्गा पर्वा' (४) आसुरी बृहती। छिनत्त्यस्य' (५) साम्नी बृहती। 'विवाहां ज्ञातीन् सर्वान्' (६) पिपीलिकमध्या अनुष्टुप्। 'अवास्तुमेनमस्वगम्' (७) आर्ची बृहतीति ॥१०॥

'क्षिप्रं वै तस्य' (१०,१०[५,[६], ४७-६१]) इति पञ्चदश। प्राजापत्यानुष्टुभः[4]। 'क्षिप्रं वै तस्यादहनम्' (२) आर्ष्यनुष्टुप्[5]। 'क्षिप्रं वै तस्य पृच्छन्ति' (४) साम्नी बृहती। 'ओषन्ती समोषन्ती' इति द्वे (८-९) प्राजापत्योष्णिहौ। 'आ दत्से जिनताम्' (१०) आसुरी गायत्री। 'अघ्न्ये प्र शिरः' (१४) इति गायत्री।

'वृश्च प्र वृश्च' (१२,११ [५,[७], ६२-७३]) इति द्वादशकः। आद्यास्तिस्रः (१-३), 'वज्रेण शतपर्वणा' (५), 'लोमान्यस्य' इति तिस्रः (७-९) प्राजापत्यानुष्टुभः। 'एवा त्वं देवि[6]' (४) गायत्री। 'प्रस्कन्धान्' (६) इति प्राजापत्या गायत्री। 'सर्वास्याङ्गा पर्वाणि' (१०) आसुरी पङ्क्तिः। 'अग्निरेनं क्रव्यात्' (११) इति प्राजापत्या त्रिष्टुप्। 'सूर्य एनम्' (१२) आसुरी उष्णिगिति ॥११॥

---

१. असिता मूको. २. लोकान् भा[1] बी. ३-३. नास्ति लं. ४. आद्या स्कन्धोग्रीवी त्वया प्रमूर्णम् (१२,१०,१५) प्राजा° मूको; °नुष्टुभम् भा[1] [4] [5] बी. ५. आर्च्यनु° बी. ६. दैवी भा[1] [4]; दैवि लं.

# अथर्ववेदे त्रयोदशं काण्डम्

'उदेहि वाजिन्' (१३,१) इति काण्डम्। ब्रह्मा। अध्यात्मं रोहितादित्यदेवत्यं त्रैष्टुभम्।

'यूयमुग्राः' इति तिस्रः (१,३-५), 'यास्ते रुहः' (९), 'सहस्रशृङ्गः' (१२), 'आ त्वा रुरोह' (१५) इति जगत्यः। 'वि रोहितः' (८) भुरिक्। 'यूयमुग्राः' (३) इति मारुती[1]। 'आ त्वा रुरोह' (१५) इत्यतिजागतगर्भा। परा (१६) अनुष्टुप्[2]। 'वाचस्पते पृथिवी' (१७) [3]पञ्चपदा ककुम्मती जगती[3]। 'रोहितो यज्ञस्य' (१३) इति अतिशाक्करगर्भाऽतिजगती[4]। 'रोहितो यज्ञम्' (१४) इति त्रिपदा पुरःपरशाक्करा[5] विपरीतपादलक्ष्मा पङ्क्तिः। 'वाचस्पत ऋतवः' (१८) इति परशाक्करा। परा (१९) परातिजागता[6]। उभे (१८-१९) पञ्चपदे ककुम्मत्यावतिजगत्यौ। पूर्वा (१८) भुरिगिति ॥१२॥

'यं त्वा' (२१) इति आर्षी निचृद् गायत्री। 'अनुव्रता' इति द्वे (२२-२३) प्राकृते[7]। 'रोहितो दिवमारुहत्' (२६) इति विराट् परोष्णिक्। परा (२७) प्राकृता[8]। 'समिद्धो अग्निः' इति चतस्रः (२८-३१) आग्नेय्यः। तत्राद्यास्तिस्रः (२८-३०) अनुष्टुभः। पूर्वा (२८) भुरिक्। तुरीया (३१) बहुदेवत्या पञ्चपदा ककुम्मती शाक्करगर्भा जगती। परा (३२) अनुष्टुप्। 'ये देवा राष्ट्रभृतः' (३५) इति उपरिष्टाद्बृहती। 'उत त्वा यज्ञाः' (३६) निचृत् महाबृहती। 'रोहिते द्यावापृथिवी' (३७) इति[9] परशाक्करा विराड् अतिजगती। 'अमुत्र सन्निह' इति द्वे (३९-४०) अनुष्टुभौ। 'एकपदी' (४२) विराड् जगती। 'आरोहन् द्याम्' (४३) इति[10] विराण्महाबृहती। 'वेद तत् ते' (४४) इति परोष्णिक्। 'सूर्यो द्याम्' इति षट् (४५-५०) 'यं वातः' इति षट् (५१-५५) अनुष्टुभः।

---

१. नास्ति लं. २. नास्ति मूको. ३-३. ककुम्मतीजगत्यौ भा[४-५] बी. ४. °रगर्भा जगती लं. ५. °पराशा° भा[४] लं. ६. परा जाग° भा[१,४]. ७. प्रकृते मूको. ८. प्रकृता मूको. ९. नास्ति भा[४] लं बी. १०. नास्ति भा[४-५] लं बी.

'वेदिं भूमिम्' (५२), 'स यज्ञः' (५५) इति पथ्या पङ्क्ती। द्वितीया (५५) ककुम्मती बृहतीगर्भा। 'यो मा' (५७) इति ककुम्मती। 'मा प्र गाम' इति द्वे (५९-६०) गायत्र्याविति॥१३॥

'उदस्य केतवः' (१३,२,१) अनुष्टुप्। 'दिशां प्रज्ञानाम्' इति द्वे (२-३), 'सप्त सूर्यः' (८) इति जगत्यः। '[1]उद्यन् रश्मीन्' (१०) इति आस्तार-पङ्क्तिः। 'पूर्वापरम्' (११) इति बृहतीगर्भा[1]। 'दिवि त्वा' इति चतस्रः (१२-१५) अनुष्टुभः। 'उदु त्यं जातवेदसम्' इति नव (१६-२४) आर्ष्यो गायत्र्यः। 'रोहितो दिवम्' (२५) इति ककुम्मती आस्तार-पङ्क्तिः[2]। 'यो विश्वचर्षणिः' (२६) इति पुरोद्व्यतिजागता भुरिग् जगती। 'एकपाद् द्विपदः' (२७) इति विराड् जगती। 'बण्महाँ असि' (२९) इति बार्हतगर्भानुष्टुप्। 'रोचसे दिवि' (३०) इति पञ्चपदा उष्णिग्बृहतीगर्भा अतिजगती[3]। 'चित्रं देवानां केतुः' (३४) इति आर्षी पङ्क्तिः। 'दिवस्पृष्ठे' (३७) इति पञ्चपदा विराड्गर्भा जगती। 'रोहितः कालः' इति द्वे (३९-४०), 'सर्वा दिशः' (४१) इत्यनुष्टुभः। 'अभ्यन्यदेति' (४३) इति जगती। 'पृथिवीप्रः' (४४) इति चतुष्पदा पुरःशाक्करा। 'पर्यस्य' (४५) इति अतिजागतगर्भा। पूर्वा (४४) भुरिक्। उभे (४४-४५) जगत्याविति॥१४॥

'य इमे द्यावापृथिवी' (१३, ३, १) इति चतुरवसानाष्टपदा आकृतिः। 'यस्माद् वाताः' इति तिस्रः (२-४) त्र्यवसानाः षट्पदाः। पूर्वे द्वे (२-३) अष्टी। तत्र पूर्वा (२) भुरिक्। तृतीया (४) अतिशाक्करगर्भा धृतिः। 'यस्मिन् विराट्' (५) इति तिस्रः (५-७) चतुरवसानाः सप्तपदाः। पूर्वे द्वे (५-६) शाक्करातिशाक्करगर्भे प्रकृती। तृतीया (७) अनुष्टुब्गर्भातिधृतिः। 'अहोरात्रैः' (८) इति त्र्यवसाना षट्पदात्यष्टिः। 'कृष्णं नियानम्' इति एकादश (९-१९) चतुरवसानाः। आद्याश्चतस्रः (९-१२), 'अयं स देवः' (१५), 'येनादित्यान्' (१७) इति सप्तपदा भुरिगतिधृतयः। 'अयं स देवः' (१५) इति निचृत्। येनादित्यान्' (१७) इति कृतिः। 'स वरुणः' (१३), 'सहस्राह्ण्यम्' (१४), 'शुक्रं वहन्ति' (१६), 'सप्त

---

१-१. नास्ति भा[२] छं. २. पङ्क्तिः छं. ३. जगती भा[२].

युञ्जन्ति' ( १८ ), 'अष्टधा युक्तः' ( १९ ) इत्यष्टपदाः। पूर्वे द्वे ( १३-१४ ) कृती। परास्तिस्रः ( १६;१८-१९ ) आकृतयः। अन्त्या (१९) भुरिक्। 'सम्यञ्चं तन्तुम्' ( २० ), 'वि य और्णोत्' ( २२ ) इति त्र्यवसाने षट्पदे अत्यष्टी। 'निम्रुचस्तिस्रः' ( २१ ), 'त्वमग्ने क्रतुभिः' इति तिस्रः ( २३-२५ ) चतुरवसाना अष्टपदाः। 'य आत्मदाः' ( २४ ) इति सप्तपदा। प्रथमा ( २१ ) आकृतिः। 'त्वमग्ने' ( २३ ), 'एकपाद् द्विपदः' ( २५ ) इति विकृती। 'य आत्मदाः' ( २४ ) इति कृतिः ॥१५॥

'स एति' इति षट् ( १३,४-९ ) पर्यायाः। मन्त्रोक्तदेवत्याः। तत्र आद्यः ( १३,४[१] ) त्रयोदश। प्रथमा एकादश ( १-११ ) प्राजापत्यानुष्टुभः। 'तमिदं निगतम्' ( १२ ) इति विराड् गायत्री। 'एते अस्मिन्' ( १३ ) इति आसुर्युष्णिक्।

'कीर्तिश्च' ( १३,५[४,२] ) इत्यष्टौ। पूर्वा ( १ ) भुरिक् साम्नी त्रिष्टुप्। 'य एतं देवम्' (२) आसुरी पङ्क्तिः। 'न द्वितीयः' (३), 'स सर्वस्मै' (६) प्राजापत्यानुष्टुभौ। 'न पञ्चमः' (४), 'नाष्टमः' (५) आसुरी-गायत्र्यौ।

'ब्रह्म च' ( १३,६[४,३] ) इति सप्त। तत्र आद्या[१] (१) भुरिक् प्राजापत्या त्रिष्टुप्। 'भूतं च' (२) आर्ची गायत्री। 'स एव मृत्युः' (४) एकपदाऽऽसुरी गायत्री। 'स रुद्रः' ( ५ ) इति [२]आर्षी गायत्री[२]। 'तस्येमे' द्वे ( ६-७ ) प्राजापत्यानुष्टुभौ[३]।

'स वा अह्नः' इति ( १३,७[४,४] ) सप्तदश। तत्र प्रथमा (१) आसुरी गायत्री। 'स वै रात्र्याः' ( २ ) प्राजापत्यानुष्टुप्। 'स वा अन्तरिक्षात्' ( ३ ) विराड् गायत्री। 'स वै वायोः' ( ४ ) प्राजापत्यानुष्टुप्[४]। 'स वै दिवः' ( ५ ) इत्यासुरी गायत्री। 'स वै दिग्भ्यः' ( ६ ) साम्न्युष्णिक्। 'स वै भूमेः' ( ७ ), '[५]स वै[५] अग्नेः' ( ८ ) प्राजापत्यानुष्टुभौ। 'स वा अद्भ्यः' ( ९ ), '[५]स वा[५] ऋग्भ्यः' ( १० ) साम्न्युष्णिहौ[६]। 'स वै यज्ञात्' ( ११ ), 'स यज्ञस्तस्य' ( १२ ) इति

---

१. द्वे भा° ४-५ बी. २-२. आसुरी गा° लं; आर्ची अनुष्टुप् ह्वि. ३. °नुष्टुभौ स रुद्रो वसुवनिः ( ५ ) आर्च्यनुष्टुप् लं. ४. °नुष्टुभं मूको. ५-५. नास्ति मूको. ६. साम्न्युष्णिगनुष्टुभौ मूको.

आसुरीगायत्र्यौ। 'स[1] स्तनयति' (१३) साम्नी बृहती। 'पापाय वा' (१४) प्राजापत्यानुष्टुप्[2]। 'यद्वा कृणोषि' (१५) आर्षी गायत्री। 'तावांस्ते' (१६) साम्न्यनुष्टुप्। 'उपो ते' (१७) इत्यासुरी[3]गायत्रीति ॥ १६ ॥

'स भूयानिन्द्रः' (१३,८ [४,५]) इति षट्। प्रथमा (१) आसुरी गायत्री। 'भूयानरात्याः' (२) यवमध्या गायत्री। 'नमस्ते अस्तु' (३) साम्न्युष्णिक्। 'अन्नाद्येन' (४) निचृत् साम्नी बृहती[3]। 'अम्भो अमः' (५) प्राजापत्यानुष्टुप्[4]। अम्भो अरुणम्' (६) विराड् गायत्री।

'उरुः पृथुः' (१३,९ [४,६]) इति पञ्च। आद्या (१), 'प्रथो वरः' (२) प्राजापत्यानुष्टुभौ। 'भवद्वसुः' (३) इति द्विपदा आर्षी गायत्रीति ॥ १७ ॥

इति श्री ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिका-
यामष्टमः पटलः समाप्तः[5] ॥

---

१. नास्ति भा[१४] लं. २. °नुष्टुभं मूको. ३-३. नास्ति लं. ४. °नुष्टुभा मा[५]; °नुष्टुभं भा[४]; °नुष्टुभः लं. ५. नास्ति भा[४]; संपूर्णता लं; संपूर्णः भा[१].

अथ

# नवमं पटलम्

## अथर्ववेदे चतुर्दशं काण्डम्

'सत्येन' (१४,१) इति सैकोनचत्वारिंशच्छतं[१] द्व्यानुवाकं काण्डम्। सावित्री सूर्या। आत्मदेवतम्। आनुष्टुभम्।

प्रथमाभिः पञ्चभिः (१, १-५) सोममस्तौत्। परया[२] (६) स्वविवाहम्। शततस्या[३] (=२, ३६) देवान्। त्रयोविंशतिकया (१,२३) सोमार्कौ। परया (१, २४) चन्द्रमसम्। परा (१, २५) नृणां विवाहमन्त्राशिषः[४]। 'परा देहि' (१, २५) 'अश्लीला तनूः' (२७) इति द्वे वधूवासःसंस्पर्शमोचन्यौ। 'ये वध्वः' (२, १०) इति यक्ष्मनाशनी। परा (२, ११) दम्पत्योः परिपन्थिनाशनी[५]।

[६]'यदश्विना' (१, १४) इति[६] विराट् प्रस्तारपङ्क्तिः। 'बृहस्पतिः प्रथमः' (१, ५५), 'तृष्टमेतत्' (१,२९) इति पुरस्ताद्बृहत्यौ। 'यदयातम्' (१, १५) इति आस्तारपङ्क्तिः। 'प्र त्वा मुञ्चामि' (१, १९), 'भगस्त्वेतः' (१, २०), 'पूर्वापरम्' (१, २३), 'नवो नवः' (१, २४), 'युवं भगम्' इति तिस्रः (१, ३१-३३), 'यो अनिध्मः' (१, ३७), 'आस्यै ब्राह्मणाः' (१, ३९), 'शं ते हिरण्यम्' (१, ४०), 'या अकृन्तन्' (१, ४५), 'स्योनं ध्रुवम्' (१,४७), 'देवस्ते' इति द्वे (१,४९-५०), 'त्वष्टा वासः' (१,५३), 'इदं तद्रूपम्' इति द्वे (१, ५६-५७), 'शिवा[७] नारी' इति द्वे (२,१३-१४), 'अघोरचक्षुः' इति तिस्रः (२,१७-१९), 'देवैर्दत्तम्'

---

१. °रिंशदृचम् भा[१] [४] बी. २. पराभिः मूको. ३. शततस्या दे° भा[१] [४-५] बी. ४. °मन्त्राशिषः पराशिषः भा[१] [४] बी. ५. परिपन्थना° भा[१] [४-५] बी. ६-६. नास्ति ळं. ७-७. नास्ति भा[१] [४-५] बी.

इति द्वे[1] ( २, ४१-४२ ), 'यावतीः कृत्याः' ( २, ४९ ), 'यज्जामयः' ( २,६१ ), 'सं त्वा नह्यामि' ( २,७० ), 'येदं पूर्वा' इति द्वे ( २,७४-७५ ) त्रिष्टुभः इति ॥१॥

'पूर्वापरम्' ( १,२३ ), 'युवं भगम्' ( १, ३१ ), 'या अकृन्तन्' ( १, ४५ ) बृहतीगर्भाः[2]। 'आरोह चर्म' इति द्वे ( २, २४-२५ ), [2]'देवा अग्रे' ( २, ३२ ), 'अप्सरसः सधमादम्' ( २, ३४ ), 'राया वयम्' ( २, ३६ ), 'तां[3] पूषन्'[3] ( २, ३८ ), 'भगस्ततक्ष' ( १, ६० ) इति परानुष्टुभः। परावित्येधिषीमहि इति व्याघ्रादिष्ववगन्तव्यः (?)। 'इह प्रियम्' ( १,२१ ), 'जीवं रुदन्ति विनयन्ति' ( १, ४६ ), 'इन्द्राग्नी द्यावापृथिवी' ( १,५४ ), 'ब्रह्माऽपरम्' ( १,६४ ), 'आ वामगन्' इति द्वे ( २,५-६ ), 'सं काशयामि' ( २,१२ ), 'आ रोह तल्पम्' ( २,३१ ), 'आ रोहोरुम्' इति द्वे ( २,३९-४० ), 'सं पितरावृत्विये' ( २,३७ ) इति जगत्यः।

तत्र[4] 'इन्द्राग्नी' ( १, ५४ ), 'ब्रह्माऽपरम्' ( १, ६४ ), 'आ रोहोरुम्' ( २,३९ ), 'सं पितरौ' ( २, ३७ ) इति भुरिक्त्रिष्टुभः। 'अनृक्षराः ( १, ३४ ), 'नवं वसानः' ( २, ४४ ) इति प्रस्तार-पङ्क्ती। 'नमो गन्धर्वस्य' ( २, ३५ ) इति पुरोबृहती त्रिष्टुप्। 'स्योनाद् योनेः' ( २,४३ ) इति त्रिष्टुबृगर्भा पङ्क्तिः। 'अपास्मत्तमः' ( २,४८ ) इति सतःपङ्क्तिः। 'यदीमे केशिनः' इति द्वे ( २,५९-६० ), 'यत्ते प्रजायाम्' ( २,६२ ) इति पथ्यापङ्क्तयः। 'इदं सु मे' ( २,९ ) इति त्र्यवसाना षट्पदा विराडत्यष्टिरिति ॥२॥

'इदमहम्' ( १,३८ ) इति पुरोबृहती त्रिपात् परोष्णिक्। 'उशतीः कन्यलाः' ( २, ५२ ) इति विराट् परोष्णिक्। 'प्रति तिष्ठ' ( २, १५ ), 'ये अन्ताः' ( २, ५१ ) इति भुरिजौ। 'यदा गार्हपत्यम्' ( २, २० ) इति पुरस्ताद्बृहती। 'उत्तिष्ठेतः'

---

१. नास्ति भा[1] ४-५ बी. २-२. नास्ति लं. ३. पूषम् लं. ४. तात भा[1] ४-५ बी.

( २, ३३ ) इति विराडास्तारपङ्क्तिः । 'अङ्गादङ्गात्' ( २, ६९ ) इति त्र्यवसाना षट्पदातिशक्करी। 'अमोऽहमस्मि' ( २, ७१ ) इति बृहती।

'सहृदयम्' ( ३,३० ) इति अथर्वा । सौम्यमानुष्टुभम्। 'आ नो अग्ने' ( २,३६ ) इति । पतिवेदनः । सौम्यम् । त्रैष्टुभम् । 'वि हि' ( २०,१२६ ) त्र्यधिका । इन्द्रः । वृषाकपिरिन्द्राणीन्द्रस्य समूदिरे । पाङ्क्तमिति ।

एष सौर्यो विवाह इति ॥ २ ॥

---

# अथर्ववेदे पञ्चदशं काण्डम्

'व्रात्य आसीत्' इति काण्डम्। अष्टादश (१५, १-१८) पर्याया 'मन्त्रोक्तदेवत्याः। अध्यात्मकमुत[1] व्रात्यदैवतम्।

आद्यः (१५,१) अष्टौ।

तत्र पूर्वा (१) साम्नी पङ्क्तिः। 'स प्रजापतिः सुवर्णम्' (२) इति द्विपदा साम्नी बृहती। 'तदेकम्' (३) एकपदा [2]यजुर्ब्राह्मी अनुष्टुप्। 'सोऽवर्धत स महान्' (४) एकपदा[2] विराड् गायत्री। 'स देवानामीशाम्' (५) साम्न्यनुष्टुप्। 'स एकव्रात्यः' (६) त्रिपदा प्राजापत्या बृहती। 'नीलमस्य' (७) आसुरी पङ्क्तिः। 'नीलेनैव' (८) इति[3] त्रिपदा[4] अनुष्टुबिति ॥४॥

'स उदतिष्ठत्' (१५,२) इति द्व्यूना त्रिंशत्।

आद्या (१), 'स दक्षिणाम्' (९), 'स प्रतीचीम्' (१५), 'स उदीचीम्' (२१), 'भूतं च' (६), 'श्रुतं च' (२६) साम्न्यनुष्टुभः[5]। 'तं बृहच्च' (२), 'तं वैरूपम्' (१६), 'तं श्यैतम्' (२२) साम्नीत्रिष्टुभः। 'बृहते च' (३) द्विपदाऽऽर्षी पङ्क्तिः। 'बृहतश्च' (४), 'वैरूपस्य' (१८), 'श्यैतस्य च' (२४) द्विपदा ब्राह्मीगायत्र्यः। 'श्रद्धा पुंश्चली' (५), 'उषाः' (१३), 'इरा'[6] (१९), 'विद्युत्' (२५) इति द्विपदा आर्चीजगत्यः। 'अमावास्या[7] च' (१४) साम्नी पङ्क्तिः। 'अहश्च' (२०) आसुरी गायत्री। 'मातरिश्वा च' (२७) पदपङ्क्तिः। 'कीर्तिश्च' (२८) त्रिपदा प्राजापत्या त्रिष्टुप्। 'तं यज्ञायज्ञियम्' (१०) एकपदा उष्णिक्। 'यज्ञायज्ञियाय च' (११) द्विपदाऽऽर्षी भुरिक् त्रिष्टुप्। 'यज्ञायज्ञियस्य च' (१२) आर्षी पराऽनुष्टुप्। 'वैरूपाय च' (१७) द्विपदा विराड् आर्षी पङ्क्तिः। 'श्यैताय च' (२३) निचृद् आर्षी पङ्क्तिरिति ॥ ५ ॥

---

१-१. अध्यात्मकं मन्त्रोक्तदेवत्या उत मूको. २-२. नास्ति लं
३. नास्ति भा[१,४]. ४. त्रिपात् भा[४] लं. ५. °नुष्टुभम् भा[१,४] लं.
६. इरा विराट् भा[१,४,५] बी. ७. आमा° लं

'स संवत्सरम्' ( १५,३ ) एकादश ।

प्रथमा (१) पिपीलिकमध्या गायत्री । 'सोऽब्रवीत्' (२) साम्न्युष्णिक् । 'तस्मै व्रात्याय' ( ३ ) याजुषी जगती । 'तस्या ग्रीष्मश्च' ( ४ ) आर्ची द्विपदोष्णिक् । 'बृहच्च रथन्तरं च' ( ५ ) आर्ची बृहती । 'ऋचः प्राश्चः' ( ६ ) आसुरी अनुष्टुप् । 'वेद आस्तरणम्' ( ७ ) साम्नी गायत्री । 'सामासादः' ( ८ ) आसुरी पङ्क्तिः । 'तामासन्दीम्' ( ९ ) आसुरी जगती । 'तस्य देवजनाः' ( १० ) प्राजापत्या त्रिष्टुप् । 'विश्वान्येवास्य' ( ११ ) विराड् गायत्रीति ॥६॥

'तस्मै प्राच्या दिशः[1]' ( १५,४ ) इति द्व्यूना विंशतिः ।

प्रथमा 'तस्मै प्राच्याः' ( १ ), 'ध्रुवायाः' ( १३ ), 'ऊर्ध्वायाः' ( १६ ) दैवीजगत्यः । 'दक्षिणायाः' ( ४ ), 'प्रतीच्याः' ( ७ ), 'उदीच्याः' ( १० ) प्राजापत्या गायत्र्यः । 'वासन्तौ मासौ' ( २ ), 'वार्षिकौ मासौ' ( ८ ) आर्च्यनुष्टुभौ । 'वासन्तावेनम्' ( ३ ), 'शारदावेनम्' ( १२ ) [2]द्विपदे प्राजापत्याजगत्यौ[2] । 'ग्रैष्मौ मासौ' ( ५ ) प्राजापत्या पङ्क्तिः । ग्रैष्मावेनम्' ( ६ ) आर्ची जगती । 'वार्षिकावेनम्' ( ९ ) भौमा । आर्ची त्रिष्टुप् । 'शारदौ मासौ' ( ११ ) साम्नी त्रिष्टुप् । 'हैमनौ मासौ' ( १४ ) प्राजापत्या बृहती । 'हैमनावेनम्' ( १५ ), 'शैशिरावेनम्' ( १८ ) इति द्विपदे आर्चीपङ्क्ती । 'शैशिरौ मासौ' ( १७ ) आर्च्युष्णिगिति ॥७॥

'तस्मै प्राच्या दिशो अन्तर्देशात्' ( १५, ५ ) इति षोडश । मन्त्रोक्तरुद्रदेवत्याः ।

प्रथमा ( १ ) त्रिपदा समविषमा गायत्री । 'भव एनम्' (२) त्रिपदा भुरिग् आर्ची त्रिष्टुप् । 'नास्य पशून्' (३;५[1];७[2];९[2];११[2]; १३[2];१६)[3] द्विपदा प्राजापत्या अनुष्टुप् । हिनस्ति व्याघ्रादिष्ववगन्तव्यः (?) 'तस्मै दक्षिणायाः' ( ४ ) त्रिपदा स्वराट् प्राजापत्या पङ्क्तिः । 'शर्वः' ( ५ ), 'पशुपतिः' ( ७ ), 'उग्रः' ( ९ ), 'महादेव एनम्' ( १३ ) त्रिपदा ब्राह्मीगायत्र्यः । 'तस्मै प्रतीच्याः' ( ६ ), 'तस्मा उदीच्याः' ( ८ ), 'तस्मा

१. नास्ति भा[1] [4] छं. २-२. द्विपदा प्राजापत्या जगती मूको.
३. अत्र मन्त्रसंख्याशीर्षस्था संख्याऽवसानत्वं सूचयति ।

ऊर्ध्वायाः' ( १२ ) इति त्रिपदाः ककुभः । "तस्मै ध्रुवायाः" ( १० ), 'तस्मै सर्वेभ्यः' ( १४ ) इति भुरिग्विषमागायत्र्यौ । 'रुद्र एनम्' ( ११ ) निचृद् ब्राह्मी गायत्री । 'ईशान एनम्' ( १५ ) विराड् इति ॥८॥

'स ध्रुवाम्' ( १५,६ ) इति षड्विंशतिः ।

आद्या ( १ ), 'स ऊर्ध्वाम्' ( ४ ) आसुरीपङ्क्ती । 'स उत्तमाम्' ( ७ ), 'स बृहतीम्' ( १० ), 'स परमाम्' ( १३ ), 'सोऽनादिष्टाम्' ( १६ ), 'स सर्वान्' ( २४ ) इति आसुरीबृहत्यः । 'स दिशः' ( २२ ) परोष्णिक् । 'तं भूमिः' ( २ ), 'तमृतवः' ( १७ ) इति आर्चीपङ्क्ती । 'सोऽनावृताम्' ( १९ ) आर्च्युष्णिक् । 'तमृतं च' ( ५ ), 'तमितिहासः' ( ११ ) इति साम्नीत्रिष्टुभौ । 'तमृचश्च[२]' ( ८ ) साम्नी पङ्क्तिः । 'तमा-हवनीयः' ( १४ ), 'विराजश्च' ( २३ ) आर्चीत्रिष्टुभौ । 'तं दितिः' ( २० ) साम्न्यनुष्टुप् । 'तं प्रजापतिः' ( २५ ) आर्च्यनुष्टुप् । 'भूमेश्च[३] वै' ( ३ ) आर्षी पङ्क्तिः । 'ऋतस्य च' ( ६ ), 'इतिहासस्य च' ( १२ ) निचृद्-बृहत्यौ । 'ऋचां च' ( ९ ) प्राजापत्या त्रिष्टुप् । 'आहवनीयस्य च' ( १५ ), 'ऋतूनां च' ( १८ ) विराड्जगत्यौ । 'दितेश्च वै' ( २१ ) आर्ची बृहती । 'प्रजापतेश्च' ( २६ ) विराड् बृहतीति ॥९॥

'स महिमा' (१५,७) इति पञ्चकः[४] । आद्या (१) त्रिपदा निचृद् गायत्री । 'तं प्रजापतिः' ( २ ) इति एकपदा विराड् बृहती । 'ऐन-मापः' ( ३ ) इति विराड् उष्णिक् । 'तं श्रद्धा च' (४) एकपदा गायत्री । 'ऐनं[५] श्रद्धा गच्छति' ( ५ ) पङ्क्तिः ।

'सोऽरज्यत', 'स विशः' इति द्वौ ( १५,८-९ ) त्रिकौ ।

तत्र आद्यस्य ( १५,८ ) आद्या ( १ ) साम्न्युष्णिक् । 'स विशः सबन्धूनन्नम्' ( २ ) प्राजापत्याऽनुष्टुप् । 'विशां च वै सः' ( ३ ) आर्ची पङ्क्तिः ।

'स विशः' ( ९,१ ) आसुरी जगती । 'तं सभा च' ( २ ) आर्ची गायत्री । 'सभायाश्च' ( ३ ) आर्ची पङ्क्तिरिति ॥१०॥

---

१-१. नास्ति भा[१ ४ ५] बी. २. तमृतवश्च मूको. ३. भूतेश्च कं. ४. पञ्चकाः मूको. ५. एतम् भा[१].

'तद्यस्य' इति त्रयः (१५,१०-१२) पर्याया एकादशकाः।

आद्यस्य (१५,१०) आद्या (१) द्विपदा साम्नी बृहती। 'श्रेयांसमेनम्' (२) इति त्रिपदा आर्ची पङ्क्तिः। 'अतो वै ब्रह्म च' (३) प्राजापत्या द्विपदा पङ्क्तिः। 'बृहस्पतिमेव' (४) त्रिपदा वर्धमाना गायत्री। 'अतो वै बृहस्पतिम्' (५) त्रिपात् साम्नी बृहती। 'इयं वा उ' (६), 'ऐनं ब्रह्म' (८), 'ऐनमिन्द्रियम्' (१०) इति द्विपदा आसुरीगायत्र्यः। 'अयं वा उ' (७), 'यः पृथिवीम्' (९) साम्न्युष्णिहौ। 'य आदित्यम्' (११) आसुरी बृहतीति ॥११॥

'व्रात्योऽतिथिः' (१५,११,१) दैवी पङ्क्तिः। 'स्वयमेनम्' (२) द्विपदा पूर्वात्रिष्टुब् अतिशक्करी। 'यदेनमाह व्रात्य क्वाऽवात्सीः' (३), 'व्रात्योदकम्'[1] (४), 'व्रात्य तर्पयन्तु' द्वे (५-६), 'ते वशः' (८), 'यदेनमाह व्रात्य यथा ते निकामः' (१०) इति निचृदार्चीबृहत्यः। अन्त्या (१०) भुरिक्। 'ऐनं प्रियम्' (७), 'ऐनं वशः' (९) इति द्विपदे प्राजापत्याबृहत्यौ[2]। 'ऐनं निकामः' (११) इति द्विपदा आर्च्यनुष्टुप्।

'व्रात्य उद्धृतेषु' (१५,१२,१) त्रिपदा गायत्री। 'स्वयमेनम्' (२) प्राजापत्या बृहती। 'स चातिसृजेत्' इति द्वे (३-४) प्राजापत्यानुष्टुभौ। द्वितीया (४) साम्नी। तथोभे (३-४) भुरिजौ। 'प्र पितृयाणम्' इति द्वे (५-६), 'न पितृयाणम्' इति द्वे (९-१०) आसुरीगायत्र्यः। 'अथ य एवम्' (८) इति विराड् गायत्री। 'नास्यास्मिन्' (११), 'पर्यस्यास्मिन्' (७) इति त्रिपादौ प्राजापत्यात्रिष्टुभाविति ॥१२॥

'व्रात्य एकाम्' (१५,१३) इति चतुर्दश। आद्या (१) साम्न्युष्णिक्। 'ये पृथिव्याम्' (२), 'ये दिवि' (६) प्राजापत्याऽनुष्टुभौ। 'व्रात्यो द्वितीयाम्' (३), 'तृतीयाम्' (५), 'चतुर्थीम्' (७) आसुरीगायत्र्यः। 'येऽन्तरिक्षे' (४), 'ये पुण्यानाम्' (८) साम्नीबृहत्यौ। 'तद्यस्यैवं विद्वान् व्रात्योऽपरिमिताः' (९) इति द्विपदा[3] निचृद् गायत्री। 'य एवापरिमिताः'

१. नास्ति कं. २. प्राजापत्ये बृ° कं. ३. त्रिपदा कं.

( १० ) इति द्विपदा विराड् गायत्री । 'अथ यस्याव्रात्यः' ( ११ ) प्राजापत्या पङ्क्तिः । 'कर्वेदेनम्' ( १२ ) आसुरी जगती । 'अस्यै देवताया उदकम्' ( १३ ) सतः पङ्क्तिः । 'तस्यामेव' ( १४ ) अक्षरपङ्क्तिरिति ॥ १३ ॥

'स यत् प्राचीम्' (१५,१४) इति चत्वारि विंशतिश्चैव सप्तमः ।

प्रथमा ( १ ) त्रिपदाऽनुष्टुप् । 'मनसाऽन्नादेन' प्रभृति सर्वा उत्तराः ( २; ४; ६; ८; १०; २०; २२; २४ ) द्विपदा आसुरीगायत्र्योऽष्टौ । शेषाश्चतस्रः 'ओषधीभिः' इत्याद्याः 'वषट्कारेण' अन्ताः ( १२;१४;१६; १८ ) प्राजापत्यानुष्टुभो भुरिजः । 'स यद्दक्षिणाम्' ( ३ ), 'ध्रुवाम्' ( ९ ) पुरउष्णिहौ । 'प्रतीचीम्' ( ५ ) अनुष्टुप् । 'उदीचीम्' ( ७ ) प्रस्तारपङ्क्तिः । 'यत् पशून्' ( ११ ) स्वराड् गायत्री । 'यत् पितॄन्' ( १३ ), 'यन्मनुष्यान्' ( १५ ) आर्चीपङ्क्ती । 'यद् देवान्' ( १९ ) भुरिङ्नागी गायत्री । 'यत् प्रजाः' ( २१ ) प्राजापत्या त्रिष्टुबिति ॥१४॥

'तस्य व्रात्यस्य' (१५,१५) इत्यष्टमं नवकं विद्यात् ।

आद्या ( १ ) दैवी पङ्क्तिः । 'सप्त प्राणाः' ( २ ) आसुरी बृहती । 'योऽस्य प्रथमः' ( ३ ), 'द्वितीयः' ( ४ ), 'पञ्चमः' ( ७ ), 'षष्ठः प्राणः' (८) प्राजापत्यानुष्टुभः । तिस्रः ( ४; ७; ८ ) भुरिजः । 'योऽस्य तृतीयः' ( ५ ), 'चतुर्थः प्राणः' ( ६ ) द्विपादौ 'साम्न्यौ बृहत्यौ'[1] । 'योऽस्य सप्तमः प्राणः' ( ९ ) विराड् गायत्री ।

'प्रथमोऽपानः' ( १५,१६ ) इति नवमस्तु सप्तकः स्यात् ।

आद्या ( १ ), 'तृतीयोऽपानः' (३) इति साम्न्युष्णिहौ । 'द्वितीयोऽपानः' ( २ ), 'चतुर्थः' ( ४ ), 'पञ्चमः' ( ५ ) प्राजापत्योष्णिहः । 'षष्ठः' ( ६ ) याजुषी त्रिष्टुप् । 'सप्तमः' ( ७ ) आसुरी गायत्रीति[2] ॥१५॥

'अस्य प्रथमो व्यानः' ( १५,१७ ) इति दश दशमः ।

आद्या ( १ ), 'अस्य पञ्चमो व्यानः' ( ५ ) इति प्राजापत्योष्णिहौ । 'अस्य द्वितीयः' ( २ ), 'अस्य सप्तमः' ( ७ ) इति आसुर्यनुष्टुभौ । 'अस्य

---

१-१. साम्नी बृ° कै. २. गामत्री भा°.

तृतीयः' ( ३ ) याजुषी पङ्क्तिः । 'अस्य चतुर्थः' ( ४ ) साम्न्युष्णिक् । 'अस्य षष्ठः' ( ६ ) याजुषी त्रिष्टुप् । 'समानमर्थम्' ( ८ ) त्रिपदा प्रतिष्ठा आर्ची पङ्क्तिः । 'यदादित्यम्' ( ९ ) द्विपदा साम्नी त्रिष्टुप् । 'एकं तदेषाम्' ( १० ) साम्न्यनुष्टुप् ।

'तस्य व्रात्यस्य' ( १५,१८ ) इति पञ्चको दशमात्परः ।

आद्या ( १ ) दैवी पङ्क्तिः । 'यदस्य दक्षिणम्' ( २ ), 'योऽस्य दक्षिणः' ( ३ ) इति आर्चीबृहत्यौ । 'अहोरात्रे नासिके' ( ४ ) आर्च्यनुष्टुप् । 'अह्ना प्रत्यङ् व्रात्यः' ( ५ ) साम्न्युष्णिगिति ॥१६॥

---

# अथर्ववेदे षोडशं काण्डम्

'अतिसृष्टो अपाम्' इति प्राजापत्यस्य नव (१६,१-९) पर्यायाः ।

तत्र त्रयोदशकमाद्यम्[1] (१६,१) विजानीयात् । आद्याद्या (१, १), 'प्रोको मनोहा' (३) द्विपदासाम्नीबृहत्यौ । 'रुजन् परि' (२) याजुषी त्रिष्टुप् । 'इदं तमति सृजामि' (४) आसुरी गायत्री । 'तेन तम्' (५) इति द्विपदा साम्नी पङ्क्तिः । [2]'अपामग्रमसि' (६) साम्न्यनुष्टुप् । 'योऽप्स्वग्निः' (७) निचृद् विराड् गायत्री । 'यो व आपोऽग्निः' (८) साम्नी पङ्क्तिः[2] । 'इन्द्रस्य वः' (९) आसुरी पङ्क्तिः । 'अरिप्रा आपः' (१०) याजुषी त्रिष्टुप् । 'प्रास्मदेनः' (११) साम्न्युष्णिक् । 'शिवेन मा' (१२), 'शिवानग्नीन्' (१३) आर्च्यनुष्टुभाविति ॥१७॥

'निर्दुरर्मण्यः' इति द्वौ (१६,२-३) षट्कौ । सप्तकः परः (१६,४) । पूर्वः (१६,२) वाग्देवत्यः । उत्तरौ (१६,३-४) ब्रह्मादित्यदेवत्यौ ।

'निर्दुरर्मण्यः' (१६, २,१) आसुर्यनुष्टुप् । 'मधुमती स्थ' (२), आसुर्युष्णिक् । 'उपहूतो मे' (३) साम्न्युष्णिक् । 'सुश्रुतौ कर्णौ' (४) त्रिपदा साम्नी बृहती । 'सुश्रुतिश्च' (५) आर्च्यनुष्टुप् । 'ऋषीणां प्रस्तरोऽसि' (६) निचृद् विराड् गायत्रीति ॥१८॥

'मूर्धाहम्' (१६,३,१) आसुरी गायत्री । 'रुजश्च मा' (२), 'उर्वश्च' (३) [3]आर्च्यनुष्टुभौ । 'विमोकश्च'[3] (४) प्राजापत्या त्रिष्टुप् । 'बृहस्पतिर्मे' (५) साम्न्युष्णिक् । 'असंतापं मे' (६) द्विपदा साम्नी त्रिष्टुप् ।

'नाभिरहम्' (१६,४,१), 'मा मां प्राणः' (३) साम्न्यनुष्टुभौ । 'स्वासदसि' (२) साम्न्युष्णिक् । 'सूर्यो माऽह्नः' (४) त्रिपदा-

---

१. त्रयोदशाद्यं मूको. २-२. नास्ति कं.

ऽनुष्टुप्। 'प्राणापानौ मा मा' (५) आसुरी गायत्री। 'स्वस्त्यद्योषसो दोषसश्च' (६) आर्च्युष्णिक्। 'शक्करी स्थ' (७) त्रिपदा विराड्गर्भा अनुष्टुबिति ॥१९॥

'विद्म ते' इति त्रयः (१६, ५-७) दुःस्वप्ननाशनदेवत्याः। तान् यमः।

आद्यम् (१६,५) दशकम् (१-१०[=१-६])। तस्यादित[1] आद्याः षट्[2] (१;४[१]-७[१];८) विराड्गायत्र्यः। पञ्चमी (५) भुरिक्। षष्ठी (६) स्वराट्। 'अन्तकोऽसि (२;४[२]-७[२];९) प्राजापत्या गायत्री। 'तं त्वा स्वप्न' (३;४[३]-७[३];१०) द्विपदा साम्नी बृहती।

'अजैष्माद्य' (१६, ६) इत्येकादश उषोदेवत्याः। प्रथमाश्चत्वारः (१-४) प्राजापत्यानुष्टुभः। 'उषा देवी' (५) साम्नी पङ्क्तिः। 'उषस्पतिः' (६) निचृद् आर्षी बृहती। 'तेऽमुष्मै' (७) द्विपदा साम्नी बृहती। 'कुम्भीका' (८) आसुरी जगती। जाग्रद्दुष्वप्न्यम्' (९) आसुरी बृहती। 'अनागमिष्यतो वरान्' (१०) आर्च्युष्णिक्। 'तदमुष्मा अग्ने (११) त्रिपदा यवमध्या गायत्री वाऽऽर्च्यनुष्टुबिति ॥२०॥

'तेनैनम्' (१६,७) इति द्व्यधिकम् (११+२=१३) विहितम्। आद्या[3] (१) पङ्क्तिः। 'देवानामेनम्' (२) साम्न्यनुष्टुप्। 'वैश्वानरस्यैनम्' (३) आसुर्युष्णिक्। 'एवानेवाव' (४) प्राजापत्या गायत्री। 'योऽस्मान् द्वेष्टि तमात्मा' (५) आर्च्युष्णिक्। 'निर्द्विषन्तं दिवः' (६), 'यददो अदः' (९), 'यदहरहः' (११) साम्नीबृहत्यः। 'सुयामन्' (७) याजुषी गायत्री। 'इदमहमामुष्यायणे' (८) प्राजापत्या बृहती। 'यज्जाग्रद् यत् सुप्तः' (१०) साम्नी गायत्री। 'तं जहि तेन' (१२) भुरिक् प्राजापत्याऽनुष्टुप्। 'स मा जीवीत् तम्' (१३) आसुरी त्रिष्टुबिति ॥२१॥

'जितमस्माकम्' (१६,८) इत्येकादश वै त्रिगुणानि (३३[=१-२७])। आद्या[2] (१;५[१]-२९[१];३०) एकपदा यजुर्ब्राह्मी अनुष्टुप्। 'तस्मादमुं

---

१. तस्याद्यादितः मूको. २. अत्र मन्त्रसंख्याशीर्षस्था संख्याऽवसानचं सूचयति। ३. आद्यः भा[१ ४ ५] लं.

निर्भजामोऽमुम्' ( २;५$^{२}$-२९$^{२}$;३१ ) त्रिपदा निचृद् गायत्री। 'स ग्राह्याः पाशात्' ( ३ ) प्राजापत्या गायत्री। 'तस्येदं वर्चस्तेजः' ( ४;५$^{४}$-२९$^{४}$;३३ ) त्रिपदा प्राजापत्या त्रिष्टुप्। 'स निर्ऋत्याः' इति तिस्रः ( ५$^{३}$-७$^{३}$ ), 'स ऋषीणाम्' ( १२$^{३}$ ), 'स ऋतूनाम्' ( २०$^{३}$ ), 'स मासानाम्' ( २२$^{३}$ ), 'स इन्द्राग्न्योः' ( २७$^{३}$ ) आसुरीजगत्यः। 'स पराभूत्याः' ( ८$^{३}$ ), 'स बृहस्पतेः' ( १०$^{३}$ ), 'स प्रजापतेः' ( ११$^{३}$ ), 'सोऽङ्गिरसाम्' ( १४$^{३}$ ), 'सोऽथर्वणाम्' ( १६$^{३}$ ), 'स आर्तवानाम्' ( २१$^{३}$ ), 'स आर्षेयाणाम्' ( १३$^{३}$ ) आसुरीत्रिष्टुभः। 'स देवजामीनाम्' ( ९$^{३}$ ), 'स आङ्गिरसानाम्' ( १५$^{३}$ ), 'स आथर्वणानाम्' ( १७$^{३}$ ), 'स वनस्पतीनाम्' ( १८$^{३}$ ), 'स वानस्पत्यानाम्' ( १९$^{३}$ ), 'सोऽर्धमासानाम्' चत्वारः ( २३$^{३}$-२६$^{३}$ ), 'स मृत्योः' ( ३२ ) आसुरीपङ्क्तयः। 'स मित्रावरुणयोः' द्वे ( २८$^{३}$-२९$^{३}$ ) आसुरीबृहत्याविति ॥२२॥

'जितमस्माकम्' ( १६, ९ ) इति परश्चत्वारि वैवचनानि। प्रथमा ( १ ) प्राजापत्या आर्च्यनुष्टुप्। 'तदग्निः' ( २ ) मन्त्रोक्तबहुदेवत्यः। आर्च्युष्णिक्। 'अगन्म' द्वौ ( ३-४ ) सौर्यौ। पूर्वः ( ३ ) साम्नी पङ्क्तिः। उत्तरः ( ४ ) परोष्णिगिति ॥ २३ ॥

इति श्री[1] ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां नवमः पटलः समाप्तः[2] ॥

---

१. नास्ति भा$^{१}$. २. संपूर्णः भा$^{१}$ $^{४}$; नास्ति ळं.

अथ

# दशमं पटलम्

## अथर्ववेदे सप्तदशं काण्डम्

'विषासहिम्' (१७) ऋचस्त्रिंशत्। ब्रह्मा। आदित्यदेवत्याः।

जगती प्रथमा (१)। 'विषासहिं सहमानम्' इत्यष्टौ (१-८) त्र्यवसानाः। आद्याश्चतस्रः (२-५) अतिजगत्यः[1]। 'उदिहि' इति द्वे (६-७), 'असति सत्' (१९) अत्यष्टयः[2]। 'मा त्वा दभन्' (८), 'त्वमिन्द्रासि विश्वजित्' (११), 'त्वं रक्षसे' (१६) इति अतिधृतयः। 'त्वं न इन्द्र महते' (९) इति पञ्चपदा शक्वरी। 'त्वं न इन्द्रोतिभिः' इति चतस्रः (१०-१३), 'त्वं रक्षसे' (१६), 'त्वमिन्द्रस्त्वं महेन्द्रः' इति द्वे (१८-१९), 'उदगादयमादित्यः' (२४) इति त्र्यवसानाः। आद्या (१०) अष्टपदा धृतिः। 'अदब्धो दिवि' (१२) इति कृतिः। 'या त इन्द्र' (१३) प्रकृतिः। 'त्वामिन्द्र' इति द्वे (१४-१५) पञ्चपदे शक्वर्यौ। 'पञ्चभिः पराङ्' (१७) इति पञ्चपदा विराडतिशक्वरी। 'त्वमिन्द्रस्त्वं महेन्द्रः' (१८) इति भुरिगष्टिः। 'उदगादयमादित्यः' (२४) इति विराडत्यष्टिः। 'विषासहिम्' इति [3]अष्टासु पञ्च[3] (१-५) षट्पदाः। शेषाः (६-८) सप्तपदाः। 'शुक्रोऽसि' (२०) इति ककुप्। 'रुचिरसि' (२१) इति चतुष्पादुपरिष्टाद्बृहती। 'उद्यते' इति यजुषी[4] द्वे (२२-२३) द्विपदे। पूर्वा (२२) अनुष्टुप्। उत्तरा (२३) निचृद् बृहती। 'आदित्य नावम्' इति द्वे (२५-२६) अनुष्टुभौ। 'प्रजापतेरावृतः' (२७), 'अग्नेर्मा गोप्ता' (३०) इति जगत्यौ। 'परीवृतो' ब्रह्मणा' इति द्वे (२८-२९) त्रिष्टुभाविति ॥१॥

---

१. जगत्यः बी. २. अष्टयः भा[१] [५] बी. ३-३. अष्टौ मूको; तु. द्वि. शोधप्रस्तावः। ४. या° मूको.

# अथर्ववेदे अष्टादशं काण्डम्

'ओ चित् सखायम्' इति चतुरनुवाकमष्टाविंशतिसूक्तकं त्र्यशीतिद्विशतर्चं[1] यमदेवत्यं त्रैष्टुभं काण्डम् ( १८ )। अथर्वा। मन्त्रोक्तबहुदेवत्यं च।

'यमस्य मा यम्यम्' ( १८,१,८ ) आर्षी पङ्क्तिः। 'न वा उ ते' ( १४ ) भुरिक्। 'बतो बतासि यम' ( १५ ) आर्षी पङ्क्तिः। 'वृषा वृष्णे दुदुहे' इति तिस्रः ( १८-२० ), 'अध त्यं द्रप्सम्' इति तिस्रः (२१-२३) जगत्यः। 'सखायः' इति द्वे ( ३७-३८ ) परोष्णिहौ। 'सरस्वतीं देवयन्तः' इति तिस्रः (४१-४३) सरस्वतीदेवत्याः। 'स्तुहि श्रुतम्[2]' (४०) इति रौद्री। पूर्वसूक्तानि (?)। 'उदीरतामवरः' इति तिस्रः (४४-४६) मन्त्रोक्तपितृदेवत्याः। 'परेयिवांसम्' इति द्वे (४९-५०) भुरिजौ। 'बर्हिषदः पितरः' इति द्वे (५१-५२) पित्र्ये। 'उशन्तस्त्वेधीमहि' इति द्वे ( ५६-५७ ) अनुष्टुभौ। 'अङ्गिरोभिर्यज्ञियैः' (५९) पुरोबृहती। 'इत एत उदारुहन्' ( ६१ ) इत्यनुष्टुप्। एकषष्टिरिति ॥१॥

'यमाय सोमः' इति तिस्रः ( १८,२,१-३ ) अनुष्टुभः। 'मैनमग्ने' ( ४ ) इत्याग्नेयी। 'सूर्यं चक्षुषा' ( ७ ), 'यास्ते शोचयः' ( ९ ) जगत्यौ। 'यदा शृतम्' ( ५ ) इति जातवेदसी। भुरिक्। 'त्रिकद्रुकेभिः पवते' ( ६ ) अनुष्टुप्। 'उरूणसौ' ( १३ ) जगती। 'सोम एकेभ्यः' इति पञ्च ( १४-१८ ) अनुष्टुभः। 'स्योनास्मै भव पृथिवि' ( १९ ) इति त्रिपदाऽऽर्षी गायत्री। 'असंबाधे' ( २० ) अनुष्टुप्। तथा 'उत् त्वा वहन्तु' इति द्वे ( २२-२३ ), 'मा त्वा वृक्षः सं बाधिष्ट' ( २५ ) अनुष्टुभः। 'मा ते मनः' ( २४ ) इति त्रिपदा समविषमाऽऽर्षी गायत्रीति ॥३॥

'यत्ते अङ्गम्' ( २६ ) इति भुरिक्। 'सं विशन्तु' ( २९ ) इति पित्र्या। 'यां ते धेनुम्' ( ३० ), 'ये निखाताः' ( ३४ ) आग्नेयी, 'शं

---

१. नवर्चं भा[४-५] वी.; अशितिद्विशतनवर्चम् लं.; तु. द्वि. शोधप्रस्तावः २. श्रुतिम् भा[४].

तपः' (३६) इत्यनुष्टुभः। 'ददाम्यस्मै' (३७) इति[1] विराड् जगती। 'इमां मात्राम्' इति सप्त (३८-४४) आर्षीगायत्र्यः। 'अपेमाम्' (४०), निरिमाम्' इति तिस्रः (४२-४४) भुरिजः। 'अमासि मात्राम्' (४५) ककुम्मती अनुष्टुप्। 'प्राणो अपानः' (४६), 'उदन्वती द्यौः'[2] (४८), 'इदमिद् वै' इति तिस्रः (५०-५२) अनुष्टुभः। 'ये नः पितुः' (४९) भुरिक्। 'इमौ युनज्मि ते' (५६) अनुष्टुप्। 'एतत् त्वा वासः'[3] (५७) भुरिक्। षष्टिरिति ॥४॥

'प्रजानत्यघ्न्ये जीवलोकम्' (१८,३,४), 'उत्तिष्ठ प्रेहि' (८), 'वर्चसा मां समनक्तु' (११), 'आ यूथेव क्षुमति' (२३) इति सप्तःपङ्क्तयः। 'उप द्यामुप वेतसम्' (५) इति त्रिपदा निचृद् गायत्री। 'यं त्वमग्ने समदहः' (६) अनुष्टुप्। उभे (५-६) आग्नेय्यौ। 'अञ्जते व्यञ्जते' (१९), 'इन्द्रो मा मरुत्वान्' इति पञ्च (२५-२९) जगत्यः। तत्रैकाधिका (?) भुरिक्। अन्त्या (२९) विराट्। 'प्राच्यां त्वा' (३०) पञ्चपदाऽति-जगती। 'दक्षिणायां त्वा' (३१) विराट् शक्करी। 'प्रतीच्यां त्वा' इति चतस्रः (३२-३५) भुरिजः। 'धर्ताऽसि' (३६) इत्येकावसाना आसुर्यनुष्टुप्। 'उदपूरसि' (३७) तथाऽऽसुरी गायत्रीति ॥५॥

'स्वासस्थे भवतम्' (३९) इति परात्रिष्टुप् पङ्क्तिः। 'अग्नि-ष्वात्ताः पितरः' (४४), 'ये नः पितुः पितरः' (४६) इति मन्त्रोक्तदेवत्ये जगत्यौ। 'ये तातृषुः' (४७), 'उप सर्प' (४९), 'उत्ते स्तभ्नामि' (५२) इति भुरिजः। 'उच्छ्वञ्चस्व' (५०) इति भौमा। प्रस्तारपङ्क्तिः। 'अथर्वा पूर्णम्' (५४) इति पुरोऽनुष्टुप्। ऐन्द्वी। 'पयस्वतीरोषधयः' (५६) आप्या। अनुष्टुप्। 'सं गच्छस्व' (५८) इति विराट्। 'शं ते नीहारः' (६०) इति त्र्यवसाना षट्पदा जगती। 'आ रोहत दिवमुत्तमाम्' (६४) इति भुरिक् पथ्या पङ्क्तिः आर्षी[3]। 'इन्द्र क्रतुं नः' (६७) इति पथ्या बृहती। 'अपूपापिहितान्' (६८), पुनर्देहि' (७०) इत्यनुष्टुभौ। 'यास्ते धानाः' (६९), 'आ रभस्व जातवेदः' (७१) इति उपरिष्टाद्बृहत्यौ। 'ये ते पूर्वे' (७२) अनुष्टुप्। [4]सप्ततिस्त्र्यधिकात् परः[4] इति ॥६॥

---

१. नास्ति भा[१] [४] कं. २. नास्ति भा[५] लं. ३. नास्ति भा[१] [५].
४-४. °त्र्यधिकारः भा[२]; °त्र्याधिका परः भा[१] [४] लं बी.

'आ रोहत' ( १८,४,१ ), [1]'त्रयः सुपर्णाः' ( ४ ), 'तीर्थैस्तरन्ति' ( ७ ) इति भुरिजः[1] । 'देवा यज्ञमृतवः' ( २ ), 'जुहूर्दाधार' ( ५ ) इति जगत्यौ । 'ऋतस्य पन्थामनु' ( ३ ) इति पञ्चपदा भुरिग् अतिजगती । 'ध्रुव आ रोह' ( ६ ) इति पञ्चपदा शक्करी । 'अङ्गिरसामयनम्' ( ८ ) पञ्चपदातिशक्करी । 'पूर्वो अग्निः' ( ९ ) इति पञ्चपदा भुरिक् शक्करी । 'शमग्ने' (११) जगती । 'शमग्नयः' ( १२ ) महाबृहती । 'यज्ञ एति विततः' ( १३ ) इति त्र्यवसाना पञ्चपदा शक्करी । 'ईजानश्चितम्[2]' ( १४ ) भुरिक् । 'अपूपवान् क्षीरवान्' इति नव ( १६-२४ ) त्रिपदा[3] भुरिजो महाबृहत्य इति ॥७॥

'यास्ते धानाः' ( २६ ) इति उपरिष्टाद्बृहती । 'अक्षितिम्' ( २७ ) याजुषी गायत्री । 'शतधारं वायुम्' ( २९ ) इति जगती । 'एतत् ते देवः' इति द्वे ( ३१-३२ ) अनुष्टुभौ । 'एतास्ते असौ धेनवः' ( ३३ ) इति उपरिष्टाद्बृहती[4] । 'सहस्रधारम्' ( ३६ ) इति भुरिक् । 'इहैवैधि' ( ३८ ) इत्यनुष्टुप् । 'पुत्रं पौत्रम्' ( ३९ ) इति पुरोविराड् आस्तारपङ्क्तिः । 'समिन्धते अमर्त्यम्' इति द्वे ( ४१-४२ ) अनुष्टुभौ । 'आ प्र च्यवेथामप' ( ४९ ) इति अनुष्टुब्गर्भा त्रिष्टुप् । 'एयमगन्[5]' ( ५० ), 'इदं पितृभ्यः' ( ५१ ) इति जगत्यौ । 'पर्णो राजा' ( ५३ ) इति पुरोविराट् सतःपङ्क्तिरिति ॥ ८ ॥

'यथा यमाय' इति तिस्रः ( ५५-५७ ) अनुष्टुभः । तत्र 'इदं हिरण्यम्' ( ५६ ) इति ककुम्मती । 'वृषा मतीनाम्' ( ५८ ) जगती । 'त्वेषस्ते' ( ५९ ), 'अक्षन्नमीमदन्त' ( ६१ ) इत्यनुष्टुभौ । 'प्र वा एतीन्दुः' ( ६० ) इति भुरिक् । 'आ यात पितरः' इति द्वे ( ६२-६३ ) आस्तारपङ्क्ती । पूर्वा ( ६२ ) भुरिक् । उत्तरा ( ६३ ) स्वराट् । 'असौ हा इह' ( ६६ ) इति त्रिपदा स्वराड् गायत्री । 'शुम्भन्तां लोकाः' इति द्वे ( ६७-६८ ) एकावसाने । पूर्वा (६७) द्विपदाऽऽर्च्यनुष्टुप् । [6]परा (६८) आसुर्यनुष्टुप्[6] इति ॥९॥

'अग्नये कव्यवाहनाय' ( ७१ ) इति प्रभृति 'येऽत्र पितरः'

---

१-१. नास्ति लं. २. °श्चित्तम् भा[1] कं. ३. त्रिपदः मूको. ४. नास्ति भा[1] [4]. ५. °गनिति भा[4] कं बी. ६-६. नास्ति बी.

( ८६ ) इत्यन्तम्[1] एकावसानाः। 'अग्नये' ( ७१ ) आसुर्यनुष्टुप्। 'सोमाय पितृमते' इति तिस्रः ( ७२-७४ ) आसुरीपङ्क्तयः। 'एतत् ते प्रततामह' ( ७५ ) आसुरी गायत्री। परा ( ७६ ) आसुरी उष्णिक्। उत्तरा ( ७७ ) दैवी जगती। [2]'स्वधा पितृभ्यः पृथिविषद्भ्यः' ( ७८ ) आसुरी त्रिष्टुप्। परा ( ७९ ) आसुरी पङ्क्तिः। उत्तरा ( ८० ) आसुरी जगती[2]।

'नमो वः पितरः' ( ८१-८७ ) इति पितृदेवत्यम्। आद्या ( ८१ ) प्राजापत्याऽनुष्टुप्। 'पितरो भामाय' ( ८२ ) साम्नी बृहती। 'पितरो यद्घोरम्' (८३), 'यच्छिवम्' (८४) साम्नीत्रिष्टुभौ। 'नमो वः पितरः स्वधा' (८५) आसुरी बृहती। 'यत्र पितरः' इति द्वे (८६-८७) चतुष्पादौ[3] उष्णिहौ। पूर्वा ( ८६ ) ककुम्मती। 'य इह' ( ८७ ) शङ्कुमती।

'आ त्वाग्न इधीमहि' ( ८८ ) इति त्र्यवसाना पथ्या पङ्क्तिः। आग्नेयी। 'चन्द्रमा अप्स्वन्तः' (८९) इति चान्द्रमसी। पञ्चपदा पथ्या पङ्क्तिः। एकोननवतिश्चैव यमेषु विहिता ऋचः इति ॥ १० ॥

---

१. इति आऽतः मूको.    २-२. नास्ति भा[१ ४] बी.    ३. चतुष्पदौ भा[१ ४ ५] बी.

# अथर्ववेदे एकोनविंशं काण्डम्

'सं सं स्रवन्तु नद्यः' इति[1] ब्रह्मकाण्डम्[2] (१९)। ब्रह्मा चान्द्रमसमानुष्टुभमपश्यत्।

आद्यम् (१९,१) तृचं[3] याज्ञिकम्। तस्याद्ये द्वे (१-२) पथ्याबृहत्यौ। 'रूपंरूपं वयोवयः' (३) इति पङ्क्तिः।

'शं त आपः' (१९, २) इति पञ्चर्चम्। सिन्धुद्वीपः। आप्यम्।

'दिवस्पृथिव्याः पर्यन्तरिक्षात्' इति द्वे (१९.३-४) चतुर्ऋचे। अथर्वाङ्गिराः। आग्नेये त्रैष्टुभे।

'यस्ते अप्सु महिमा' (३,२) इति भुरिक्। 'यामाहुतिम्' (४,१) इति पञ्चपदा विराडतिजगती। 'आकूतिं देवीम्' (२) इति जगती। मन्त्रोक्तदेवत्या।

'इन्द्रो राजा' (१९,५) इत्येकर्चमैन्द्रं त्रैष्टुभमिति ॥ ११ ॥

'सहस्रबाहुः' (१९,६) इति षोडश[4]। नारायणः। पुरुषदेवत्याः। अनुष्टुभः।

'चित्राणि साकम्' (१९,७) इति पञ्च, 'यानि नक्षत्राणि' (१९.८) सप्त। उभे मन्त्रोक्तनक्षत्रदेवत्ये[5]। गार्ग्यः। त्रैष्टुभे।

'अन्नं पूर्वा' (७,४) इति भुरिक्। 'यानि नक्षत्राणि' (८,१) विराड् जगती। 'इमा या ब्रह्मणस्पते' (६) इति ब्राह्मणस्पत्या त्र्यवसाना षट्पदा अतिजगती[6]।

'शान्ता द्यौः' (१९, ९) इति चतुर्दश, 'शं न इन्द्राग्नी' (१९,१०) दश, 'शं नः सत्यस्य' (१९, ११) षट्, 'उषा अप स्वसुः' (१९,१२) इत्येकर्चम्। [7]एतानि (१९,९-१२) त्रैष्टुभानि ब्रह्मा शान्तिकामोऽपश्यदिति[7] ॥ १२ ॥

---

१. इति तृचं बहृवृचम् भा[१,४,५] बी. २. ब्राह्मका° लं. ३. नास्ति मूको. ४. षोडशर्चं भा[१,४]. ५. नक्षत्रदेवत्ये उत मन्त्रोक्तदेवत्ये भा[४]. ६-६. नास्ति भा[१,४,५] बी. ७-७. वासिष्ठं वैश्वदेवं शन्तातीयं त्रैष्टुभमाद्यं मन्त्रोक्तबहुदेवत्यमिति भा[१,४,५] बी.

'शान्ता द्यौः' (१९,९,१) विराड् उरोबृहती। 'इमानि यानि पञ्च' (५) इति पञ्चपदा पथ्या पङ्क्तिः। 'नक्षत्रमुल्काभिहतम्' (९) इति पञ्चपदा ककुम्मती। 'ब्रह्म प्रजापतिः' (१२) इति त्र्यवसाना सप्तपदाऽष्टिः। 'पृथिवी शान्तिः' (१४) इति चतुष्पदा संकृतिः। शेषाः (२-४,६-८,१०,११,१३) काण्डप्रतीकत्वेनानुष्टुभः।

'इन्द्रस्य बाहू' (१९,१३) एकादश। अप्रतिरथः। ऐन्द्र्यः। त्रिष्टुभः। 'संक्रन्दनेन' इति चतस्रः (३-६), 'अस्माकमिन्द्रः' (११) इति भुरिजः।

'इदमुच्छ्रेयः' (१९,१४) इत्येकर्चम्। अथर्वा। द्यावापृथिवीयम्। त्रैष्टुभमिति॥ १३॥

'यत इन्द्र भयामहे' (१९,१५) इति षड्ऋचम्[1], 'असपत्नं पुरस्तात्' (१९, १६) इति द्व्यृचम्[2]। आद्यस्य (१५) चतस्रः (१-४) ऐन्द्र्यः। प्रथमस्य अन्त्ये द्वे (१५, ५-६), द्वितीयस्य चतस्रोऽपि[3] मन्त्रोक्तबहुदेवत्याः।

'यत इन्द्र' (१५,१) इति पथ्या बृहती। 'इन्द्रं वयम्' (२) 'अभयं नः करत्यन्तरिक्षम्' (५) इति द्वे[4] चतुष्पदे जगत्यौ। 'इन्द्रस्त्रातोत' (३) इति विराट् पथ्या पङ्क्तिः। 'उरुं नो लोकम्' (४), 'अभयं मित्रात्' (६) इति त्रिष्टुभौ।

'असपत्नं पुरस्तात्' (१६, १) इत्यनुष्टुप्। 'दिवो मादित्याः' (२) इति त्र्यवसाना सप्तपदा बृहतीगर्भा अतिशक्करीति॥ १४॥

'अग्निर्मा पातु' (१९,१७), 'अग्निं ते वसुवन्तम्' (१९,१८) इति उभे दशके। प्रत्यृचं मन्त्रोक्तदेवत्ये। पूर्वम् (१७) जागतम्। उत्तरम् (१८) द्वैपदम्।

'सूर्यो मा द्यावापृथिवीभ्याम्' (१७, ५), 'विश्वकर्मा' (७), 'बृहस्पतिर्मा' (१०) अतिजगत्यः। 'आपो मा' (६) इति भुरिक्। 'प्रजापतिर्मा' (९) अतिशक्करी पञ्चपदा।

---

१. षडर्चं भा[४] बी. २. तृचम् भा[१ ५] लं. ३. तिस्रोऽपि मूको. ४. नास्ति भा[१ ४ ५] लं.

'अग्निं ते वसुवन्तम्' ( १८, १ ) साम्नी त्रिष्टुप्। 'वायुं ते' इति तिस्रः ( २-४ ), 'अपस्त ओषधीमतीः' ( ६ ) आर्च्यनुष्टुभः। 'इन्द्रं ते' ( ८ ) साम्नी त्रिष्टुप्। 'सूर्यं ते' ( ५ ) सम्राड् आर्च्यनुष्टुप्। 'विश्वकर्माणं ते' ( ७ ), 'प्रजापतिं ते' ( ९ ), 'बृहस्पतिं ते' (१०) इति प्राजापत्यात्रिष्टुभ इति ॥ १५ ॥

'मित्रः पृथिव्योदक्रामत्' ( १९, १९ ) इति चैकादशकं चान्द्रमसं पाङ्क्तमुत मन्त्रोक्तदेवत्यम्।

'मित्रः' ( १ ), 'सूर्यः' ( ३ ), 'इन्द्रः' ( ९ ) भुरिग्बृहत्यः। 'देवा अमृतेन' (१०) स्वराट्। शेषाः (२,४-८,११) सर्वा अनुष्टुब्गर्भाः।

'अप न्यधुः पौरुषेयं वधम्'[1] ( १९,२० ) बहुदेवत्यं त्रैष्टुभम्। 'यानि चकार' ( २ ) इति जगती। 'यत् ते तनूषु' ( ३ ) पुरस्ताद्बृहती। 'वर्म मे' ( ४ ) अनुष्टुप्[2]।

'गायत्र्युष्णिक्' ( १९,२१,१ ) इत्येकावसाना द्विपदा साम्नी बृहती। इदमेकर्चं ब्रह्मा छान्दसं छन्दोऽनुक्रान्तिविज्ञानायापश्यदिति ॥ १४ ॥

'आङ्गिरसानामाद्यैः' ( १९,२२ ) इत्येकविंशतिः। तत्र सर्वाः ( १-२० ) एकावसाना विहायान्त्याम् ( २१ )। अङ्गिराः। मन्त्रोक्तदेवत्यम्।

आद्या ( १ ) साम्न्युष्णिक्। 'सप्तमाष्टमाभ्याम्' ( ३ ), 'पृथक्सहस्राभ्याम्' ( १९ ) प्राजापत्यागायत्र्यौ। 'उपोत्तमेभ्यः' ( ११ ), 'नीलनखेभ्यः' ( ४ ), 'पर्यायिकेभ्यः'[3] ( ७ ), 'महागणेभ्यः' ( १७ ) दैवीजगत्यः। 'हरितेभ्यः' ( ५ ), 'उत्तमेभ्यः' ( १२ ), 'उत्तरेभ्यः' ( १३ ) दैवीत्रिष्टुभः। 'षष्ठाय' ( २ ), 'क्षुद्रेभ्यः' ( ६ ), 'ऋषिभ्यः' इति तिस्रः ( १४-१६ ), 'ब्रह्मणे' ( २० ) दैवीपङ्क्तयः। 'प्रथमेभ्यः शङ्खेभ्यः' इति तिस्रः ( ८-१० ) आसुरीजगत्यः। 'सर्वेभ्योऽङ्गिरोभ्यो विदगणेभ्यः' ( १८ ) आसुर्यनुष्टुप्। 'ब्रह्मज्येष्ठा' ( २१ ) इति चतुष्पदा त्रिष्टुबिति ॥ १९ ॥

'आथर्वणानां चतुर्ऋचेभ्यः' ( १९,२३ ) इति त्रिंशत्। अथर्वा।

---

१. नास्ति कं. २. अनुष्टुब्गर्भा भा[१] [४] [५]. ३. पर्यायिभ्यः कं.

मन्त्रोक्तदेवत्या उत चान्द्रमसम्। अन्त्याम् ( ३० ) वर्जयित्वा सर्वाः ( १-२९ ) एकावसानाः।

प्रथमा ( १ ) आसुरी बृहती[1]। द्वितीयादयः षट् ( २-७ ) दैवीत्रिष्टुभः। 'एकादशर्चेभ्यः' ( ८ ), 'त्रयोदशर्चेभ्यः' इति तिस्रः (१०-१२), [2]'सप्तदशर्चेभ्यः' इति तिस्रः ( १४-१६ ) प्राजापत्या गायत्र्यः। 'विंशतिः' ( १७ ), 'तृचेभ्यः'[2] ( १९ ), 'क्षुद्रेभ्यः' ( २१ ), 'सूर्याभ्याम्' ( २४ ), 'व्रात्याभ्याम्' ( २५ ), 'ब्रह्मणे' ( २९ ) दैवीपङ्क्तयः। 'महत्काण्डाय' ( १८ ), 'एकानृचेभ्यः'[3] ( २२ ), 'प्राजापत्याभ्याम्' ( २६ ), 'द्वादशर्चेभ्यः' ( ९ ), 'मङ्गलिकेभ्यः' ( २८ ), 'षोडशर्चेभ्यः'[4] ( १३ ) इति दैवीजगत्यः। 'एकर्चेभ्यः' ( २० ), 'रोहितेभ्यः' ( २३ ), 'विषासह्यै' ( २७ ) दैवीत्रिष्टुभ इति ॥१८॥

'येन देवं सवितारम्' (१९,२४) इत्यष्टौ मन्त्रोक्तबहुदेवत्याः। उत ब्राह्मणस्पत्यम्। आनुष्टुभम्।

'परि धत्त' इति तिस्रः ( ४-६ ), 'हिरण्यवर्णो अजरः' ( ८ ) इति त्रिष्टुभः। 'योगेयोगे' ( ७ ) इति त्रिपदाऽऽर्षी गायत्री।

'अश्रान्तस्य त्वा' ( १९,२५ ) इत्येकर्चमानुष्टुभं वाजिदेवत्यम्। गोपथः।

'अग्नेः प्रजातं परि' ( १९,२६ ) इति चतुर्ऋचमाग्नेयं हैरण्यं त्रैष्टुभम्। अथर्वा।

'आयुषे त्वा वर्चसे त्वा' ( ३ ) इत्यनुष्टुप्। 'यद् वेद राजा वरुणः' ( ४ ) इति पथ्या पङ्क्तिः। अनेन हिरण्यमस्तौदिति ॥१९॥

'गोभिष्ट्वा पातु' ( १९,२७ ) इति पञ्चदशकम्। भृग्वङ्गिराः। त्रिवृद्देवत्यमुत चान्द्रमसमानुष्टुभम्।

'तिस्रो दिवः'[5] ( ३ ), 'देवानां निहितं निधिम्' ( ९ ) इति त्रिष्टुभौ। 'त्रयस्त्रिंशद्देवताः'[6] ( १० ) जगती। 'ये देवाः' इति तिस्रः ( ११-१३ )

---

१. गायत्री भा[१-४] ५ बी. २-२. नास्ति लं. ३. नास्ति भा[१].
४. नास्ति भा[१] [५] बी. ५. नास्ति भा[१] [४]. ६. आपो हिरण्यं जुगुपुः मूको.

एकावसानाः। प्रथमा ( ११ ) आर्च्युष्णिक् । द्वितीया ( १२ ) आर्च्यनुष्टुप्। तृतीया ( १३ ) साम्नी त्रिष्टुप् ।

'इमं बध्नामि ते मणिम्' इति त्रीणि ( १९,२८-३० )। पूर्वम् ( २८ ) दशकम्। उत्तरम् ( २९ ) नवकम्। तृतीयम् ( ३० ) पञ्चकम्। ब्रह्मा सपत्नक्षयकामः । मन्त्रोक्तदर्भमणिदेवत्यम् । आनुष्टुभम् एतत्त्रयमिति ॥२०॥

'औदुम्बरेण मणिना' ( १९,३१ ) इति चतुर्दश। पुष्टिकामः। मन्त्रोक्तौदुम्बरमणिदेवत्यमानुष्टुभम्। वेधसः पुष्ट्यै सविता ददर्श।

'पुष्टिं पशूनाम्' ( ५ ), 'ग्रामणीरसि' ( १२ ) इति त्रिष्टुभौ। 'अहं पशूनाम्' ( ६ ) विराट् प्रस्तारपङ्क्तिः। 'त्वं मणीनाम्' ( ११ ), 'पुष्टिरसि' ( १३ ) इति पञ्चपदे शक्वर्यौ। 'अयमौदुम्बरः' ( १४ ) विराडास्तार-पङ्क्तिः।

'शतकाण्डो दुश्च्यवनः' इति द्वे ( १९,३२-३३ )। पूर्वम् ( ३२ ) दशकम्। उत्तरम् ( ३३ ) पञ्चकम्। एते मन्त्रोक्तदेवत्ये आनुष्टुभे। भृगुः सर्वकामः। आयुषे।

'प्रियं मा दर्भ' ( ३२,८ ) इति पुरस्ताद्बृहती। 'यो जायमानः' ( ३२,९ ), 'घृतादुल्लुप्तः' ( ३३,२ ), 'दर्भेण त्वम्' ( ३३,५ ) इति त्रिष्टुभः। 'सपत्नहा शतकाण्डः' ( ३२,१० ), 'सहस्रार्घः शतकाण्डः' ( ३३,१ ) इति जगत्यौ। 'त्वं भूमिम्' ( ३३, ३ ) इत्यार्षी पङ्क्तिः। 'तीक्ष्णो राजा विषासहिः' ( ३३,४ ) आस्तारपङ्क्तिः ॥२१॥

'जङ्गिडोऽसि जङ्गिडः' इति द्वे ( १९ ३४-३५ )। प्रथमम् ( ३४ ) दशकम्। द्वितीयम् ( ३५ ) पञ्चकम्। अङ्गिराः। उभे ( ३४-३५ ) मन्त्रोक्तदेवत्ये उत वानस्पत्ये। आनुष्टुभे।

'दुर्हार्दः संघोरम्' ( ३५,३ ) इति पथ्या पङ्क्तिः। 'परि मा दिवः' ( ३५,४ ) [1]निचृत् त्रिष्टुप्[1]।

'शतवारो अनीनशत्' ( १९,३६ ) इति षड्चम्[2]। ब्रह्मा। शत-वारदैवतमानुष्टुभम्।

---

१-१. जगती भा[1] रु बी. २. षडर्चं भा[1] बी.

'इदं वर्चः' ( १९,३७ ) इति चतुर्ऋचम् । अथर्वा । आग्नेयं त्रैष्टुभम् । 'वर्च आ धेहि' ( २ ) आस्तारपङ्क्तिः । 'ऊर्जे त्वा बलाय'[1] ( ३ ) इति त्रिपदा महाबृहती । [2]'ऋतुभ्यष्ट्वाऽऽर्तवेभ्यः'[2] ( ४ ) पुरउष्णिगिति ॥२२॥

'न तं यक्ष्मा' ( १९,३८ ) इति तृचं मन्त्रोक्तगुल्गुलुदेवताकमानुष्टुभम् । 'विश्वञ्चस्तस्मात्' ( २ ) इति चतुष्पादुष्णिक् । 'उभयोरग्रभम्' ( ३ ) इत्येकावसाना प्राजापत्याऽनुष्टुप् ।

'एतु देवः' ( १९,३९ ) इति दशकम् । भृग्वङ्गिराः । मन्त्रोक्तकुष्ठदेवत्यमानुष्टुभम् ।

'त्रीणि ते' ( २ ), 'जीवला नाम ते' ( ३ ) इति द्वे त्र्यवसाने पथ्यापङ्क्ती[3] । तृतीया ( ४ ) षट्पदा जगती । 'त्रिः शाम्बुभ्यः' इति चतस्रः ( ५-८ ) चतुरवसानाः । प्रथमा ( ५ ) सप्तपदा शक्वरी । [4]'अश्वत्थो देवसदनः' इति तिस्रः ( ६-८ ) अष्टयः ।

'यन्मे छिद्रं मनसः'[4] ( १९,४० ) इति चतुर्ऋचम् । ब्रह्मा । बार्हस्पत्यमुत वैश्वदेवमानुष्टुभम् ।

[5]प्रथमा ( १ ) परानुष्टुप्[5] त्रिष्टुप् । 'मा न आपः' ( २ ) इति पुरःककुम्मती उपरिष्टाद्बृहती । 'मा नो मेधाम्' ( ३ ) इति बृहतीगर्भा । 'या नः पीपरदश्विना' ( ४ ) इति त्रिपदाऽऽर्षी गायत्रीति ॥२३॥

'भद्रमिच्छन्तः' (१९,४१) इत्येकर्चं मन्त्रोक्ततपोदेवत्यं त्रैष्टुभम् ।

'ब्रह्म होता' ( १९,४२ ) इति चतस्रो मन्त्रोक्तब्रह्मदेवत्याः । आद्या (१) अनुष्टुप् । 'ब्रह्म स्रुचः' ( २ ) इति ककुम्मती पथ्या पङ्क्तिः त्र्यवसाना । 'अंहोमुचे प्र भरे' ( ३ ) इति त्रिष्टुप् । 'अंहोमुचं वृषभम्' ( ४ ) जगती ।

'यत्र ब्रह्मविदः' ( १९,४३ ) इत्यष्टौ बहुदेवत्या [6]उत ब्रह्मदेवत्याः[6] त्र्यवसानाः शङ्कुमत्यः पथ्यापङ्क्तय इति ॥२४॥

---

१. बलाय त्वा बी. २-२. ऋतुमिद्वार्तवैः भा[4][5] ळं बी. ३. पञ्चपदे बृहत्यौ भा[4][5] बी. ४-४. नास्ति ळं. ५-५. प्रथमानुष्टुप् मूको. ६-६. नास्ति भा[4] बी.

'आयुषोऽसि' ( १९,४४ ) दशकं[1] मन्त्रोक्ताञ्जनदेवत्यमानुष्टुभम्। भृगुः। 'वह्लीदम्' इति द्वे ( ८-९ ) वारुणे। प्रथमया ( १ ) शन्तातिम-प्रार्थयद्देवम्[2]। ततो मन्त्रोक्तांश्च देवानिति।

'प्राण प्राणम्' ( ४ ) चतुष्पदा शङ्कुमत्युष्णिक्। 'सिन्धोर्ग-र्भोऽसि' ( ५ ) इति त्रिपदा निचृद् विषमा गायत्री।

'ऋणाद् ऋणमिव' ( १९,४५ ) दश। तत्र पञ्च ( १-५ ) आञ्जन-देवत्याः। पराः[3] पञ्च ( ६-१० ) मन्त्रोक्तदेवत्याः।

आद्ये द्वे ( १-२ ) अनुष्टुभौ। 'अपामूर्जः' इति तिस्रः ( ३-५ ) त्रिष्टुभः। 'अग्निर्माऽग्निनाऽवतु' इति पञ्च ( ७-१० ) एकावसाना महा-बृहत्यः। तत्राद्या (६) विराट्। चतस्रः[4] (७-१०) निचृत इति ॥२५॥

'प्रजापतिष्ट्वा बध्नात्' ( १९,४६ ) इति सप्तकम्। प्रजापतिः। अस्तृतमणिदैवतं त्रैष्टुभम्।

आद्या (१) पञ्चपदा मध्येज्योतिष्मती[5] त्रिष्टुप्। 'ऊर्ध्वस्तिष्ठतु रक्षन्' (२) इति षट्पदा भुरिक् शक्वरी। 'शतं च न' (३), 'यथा त्वमुत्तरः' (७) इति पञ्चपदे पथ्यापङ्क्ती। 'इन्द्रस्य त्वा' (४) चतुष्पदा। 'अस्मिन् मणौ' (५) इति पञ्चपदा अतिजगती। 'घृतादुल्लुप्तः' (६) इति पञ्चपदो-ष्णिग्गर्भा विराड् जगती ॥२६॥

'आ रात्रि पार्थिवम्' इति चत्वारि (१९,४७-५०) सूक्तानि। पूर्वम् (४७) नवकम्। उत्तरम् (४८) षट्कम्। मध्यमम् ( ४९ ) दशकम्। अन्त्यम् (५०) सप्तकम्। एवं द्वात्रिंशन्मन्त्रोक्तरात्रिदेवत्या अनुष्टुभः गोपथः, ऋचः।

आद्यस्याद्या ( ४७,१ ) पथ्या बृहती। 'न यस्याः' (२) पञ्चपदा अनुष्टुब्गर्भा परातिजगती। [6]'रक्षा माकिर्नः' ( ६ ) पुरस्ताद्बृहती। 'माख्वानाम्' ( ७ ) इति त्र्यवसाना[7] षट्पदा जगतीति[7] ॥२७॥

---

१. दश भा[4] कं. २. °र्थयदेवम् मूको. ३. नास्ति कं. ४. तिस्रः कं. ५. ज्योतिष्मती मूको. ६-६. नास्ति कं. ७-७. नास्ति कं; °दा जगती भा[4].

'अथो यानि च' ( ४८,१ ) त्रिपदाऽऽर्षी गायत्री । 'रात्रि मातः' (२) त्रिपदा विराड् अनुष्टुप् । 'यत् किं चेदम्' ( ३ ) बृहतीगर्भा । 'ये रात्रिमनुतिष्ठन्ति' ( ५ ) पथ्या पङ्क्तिः[१] ।

'इषिरा योषा' इति पञ्च ( ४९,१-५ ), भद्रासि रात्रि' ( ८ ) इति त्रिष्टुभः । 'स्तोमस्य नः' (६) आस्तारपङ्क्तिः । 'शम्या ह' ( ७ ) पथ्या पङ्क्तिः । 'प्र पादौ न' ( १० ) इति त्र्यवसाना षट्पदा जगती । भरद्वाजश्चेति ॥२८॥

'अयुतोऽहम्' ( १९,५१) इति द्वे एकावसाने । ब्रह्मा । पूर्वा (१) आत्मदेवत्या ह्येकपदा ब्राह्मयनुष्टुप् । उत्तरा (२) सावित्री त्रिपाद् यवमध्योष्णिक् ।

'कामस्तद्' (५२) इति पञ्चकं मन्त्रोक्तकामदैवतं त्रैष्टुभम् । 'दूराच्चकमानाय' ( ३ ) चतुष्पादुष्णिक् । 'यत्काम कामयमानाः' ( ५ ) उपरिष्टाद्बृहती ।

'कालो अश्वः' इति द्वे (१९,५३-५४)। पूर्वम् (५३ ) दशकम् । उत्तरम् ( ५४ ) पञ्चकम् । एवं पञ्चदश । भृगुः । मन्त्रोक्तसर्वात्मक-कालदेवत्या अनुष्टुभ इति ॥२९॥

पूर्वस्याऽऽद्याश्चतस्रः (५३,१-४) त्रिष्टुभः । 'कालोऽमूम्[२]' (५) इति निचृत् पुरस्ताद्बृहती ।

'कालेन वातः' ( ५४,२ ) इति त्रिपदाऽऽर्षी गायत्री । 'कालेऽय-मङ्गिराः' (५) इति त्र्यवसाना षट्पदा विराडष्टिरिति ।

'रात्रिंरात्रिमप्रयातम्' ( १९,५५ ) इति षडृचमाग्नेयं[३] त्रैष्टुभम् । 'या ते वसोः' ( २ ) इत्यास्तारपङ्क्तिः । 'अपश्चा दग्धान्नस्य' (५) इति त्र्यवसाना [५]पञ्चपदा पुरस्ताज्ज्योतिष्मती । 'त्वमिन्द्रा पुरुहूत'† ( ६ ) इति[४] [५]निचृद् बृहती[५] (?) इति ॥३०॥

'यमस्य लोकात्' इति द्वे ( १९,५६-५७ ) । पूर्वम् (५६) षट्कम् । उत्तरम् (५७) पञ्चकम् । एवमेकादश । यमः । दौष्वप्न्यस्त्रिष्टुभः ।

---

१. °क्तिरिति भा[४]. २. °मूं दिवम् भा[१]. ३. षडर्चम् भा[१]. ४-४. नास्ति भा[४ ५] बी. † °न्द्रा पुरुहूत्या लं. ५-५. नास्ति मूको.

'यथा कलाम्' (५७,१) इत्यनुष्टुप्। "[1]सं राजानः[1]" (२) 'त्रिपदा त्रिष्टुप्[2]। 'देवानां पत्नीनाम्' (३) इति त्र्यवसाना चतुष्पदा त्रिष्टुप्[2]। 'तं त्वा स्वप्न' (४) इति षट्पदा उष्णिग्बृहतीगर्भा विराट् शाक्वरी। 'अनास्माकस्तद्देवपीयुः' (५) इति त्र्यवसाना पञ्चपदा परशाक्वराऽति-जगतीति ॥३१॥

'घृतस्य जूतिः' (१९,५८) इति षड्चम्[3]। ब्रह्मा। मन्त्रोक्तबहु-देवत्यमुत याज्ञिकं त्रैष्टुभम्।

'उपास्मान् प्राणः' (२) इति पुरोऽनुष्टुप्। 'वर्चसो द्यावापृथिवी (३) इति चतुष्पदाऽतिशाक्वरी। 'यज्ञस्य चक्षुः' (५) इति भुरिक्। 'ये देवानामृत्विजः' (६) इति जगती[4]।

'त्वमग्ने' (१९,५९) इति तृचमाग्नेयं त्रैष्टुभम्। प्रथमा (१) गायत्री।

'वाङ्म आसन्नसोः[5]' (१९,६०) इति द्व्यृचं मन्त्रोक्तवागादि-दैवतम्। आद्या (१) पथ्या बृहती। 'ऊर्वोः' (२) इति ककुम्मती पुरउष्णिगिति ॥३२॥

'तनूस्तन्वा मे' इति त्रीणि (१९,६१-६३) एकर्चानि ब्राह्मणस्प-त्यानि। प्रथमा (६१,१) विराट् पथ्या बृहती। 'प्रियं मा' (६२,१) अनुष्टुप्। 'उत्तिष्ठ ब्रह्मणस्पते' (६३,१) इति विराड् उपरिष्टाद्-बृहती।

अग्ने समिधम्' (१९,६४) इत्याग्नेयं चतुर्ऋचमानुष्टुभम्।

'हरिः सुपर्णः' (१९,६५) इत्येकर्चं जातवेदसं सौर्यं जागतम्।

'अयोजालाः' (१९,६६) इत्येकर्चं जातवेदसं सौर्यं वज्रदेव-त्यमतिजागतम्।

'पश्येम' (१९,६७) इत्यष्टौ सौर्याः प्राजापत्या गायत्र्य इति ॥३३॥

'अव्यसश्च' (१९, ६८) इत्येकर्चं मन्त्रोक्तकर्ममात्रदेवत्य-मानुष्टुभम्।

---

१-१. नास्ति मूको. २-२. भा[४] [५] बी. ३. नास्ति लं. ४. षडर्चम् भा[४]. ५. त्रिष्टुप् भा[४] [५] बी. ६. आस्यं न° भा[४] [५] लं बी.

'जीवा स्थ' ( १९,६९ ) इति चतस्र एकावसाना मन्त्रोक्ताऽऽदेवत्याः । प्रथमा (१) आसुर्यनुष्टुप् । 'उपजीवाः' (२) साम्न्यनुष्टुप् । 'संजीवाः' ( ३ ) इत्यासुरी गायत्री । 'जीवलाः' ( ४ ) इति साम्न्युष्णिक् ।

'इन्द्र जीव' ( १९,७० ) इत्येका सौर्य्या । त्रिपदा गायत्री ।

'स्तुता मया' ( १९, ७१ ) इति त्र्यवसाना पञ्चपदाऽतिजगती । गायत्रीदैवतमेकर्चम् ।

'यस्मात् कोशात्' ( १९, ७२ ) इत्येकर्चं परमात्मदैवतं त्रैष्टुभम् । अनेन सर्वान् देवान् [1]स्वरक्षणकामः प्रार्थयत्[1] इति भृग्वङ्गिरा ब्रह्मेति भृग्वङ्गिरा ब्रह्मेति ॥ ३४ ॥

इति श्री[2] ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां

[3]दशमः पटलः समाप्तः[3] ॥

एकोनविंशतितमं[4] काण्डं समाप्तम्[5] ॥

---

१-१. स्वरक्षणमप्रार्थयत् भा[5] लं. २. नास्ति भा[5]. ३-३. दशमं पटलं संपूर्णम् भा[6]. ४. विंशतिका° भा[6] बी. ५. अतः परमधिकम्—स्वस्ति । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । संवत् १७६७ वर्षे वैशाषवदि १ रवि दिन वायिडाज्ञातीयजगजीवनेन लिषीतमिदम् । इदं पुस्तक लेखकः पाठकयोः चिरं जीयात् ।
शुभस्तु— यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरुः ।
यावच्चन्द्रादित्यौ तावत् इदं पुस्तकं जयतु ॥
भग्नपृष्टिकटीग्रीवाबद्धमुष्टीरधोमुखम् ।
कष्टेन लेक्षितं शास्त्रं यत्नेन परिपालयेत् ॥
यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ कल्याणमस्तु भा[4].

# अथ

# एकादशं पटलम्

## अथर्ववेदे विंशतितमं काण्डम्

[1]सूक्तसंख्या ऋषिदैवतच्छन्दांस्यनुवर्तन्ते [2]आ परसूक्तसंख्यार्षिदैवतच्छन्दोभ्यः[3]। बृहतीसतोबृहत्योर्बार्हतः प्रगाथः। प्रगाथोक्तौ तं ब्रूयात्। परिभाषा।

अथाथर्वणे विंशतितमकाण्डस्य सूक्तसंख्या संप्रदायात्। ऋषिदैवतच्छन्दांस्याश्वलायनानुक्रमानुसारेण व्याख्यास्यामः खिलान् वर्जयित्वा।

'इन्द्रं त्वा' (२०,१,१-३) तृचम्[4]। विश्वामित्रगोतमविरूपाः। प्रत्यृचमिन्द्रमरुदग्नयोऽपि। गायत्रम्।

'मरुतः पोत्रात्' (२०,२) इति चतुष्कम्। एकावसानाः। आद्ये

---

१. इतः पूर्वमधिकम्—श्री गणेशायनमः गु; श्री ब्रह्मवेदाय नमः। अथ 'इन्द्र त्वा' (२०,१,१) आदीन् 'पनाय्यं तत्' (२०,१४३,९) इत्यन्तान् बहून् ऐन्द्रामान् गायत्रान् याज्ञिकशंसनमन्त्रान्† अथर्वाङ्गिरा अपश्यत्। तत्राद्यस्य (२०,१) सूक्तस्य द्वितीया (२०,१,२) मारुती। परा (२०,१,३) आग्नेयी। 'मरुतः पोत्रात्' इति चतस्रः (२०,२,१-४) मन्त्रोक्तदेवत्याः एकावसानाः। आद्ये द्वे (२०,२,१-२) विराड्गायत्र्यौ। 'इन्द्रो ब्रह्मा' (२०,२,३) आर्च्युष्णिक्। 'देवो द्रविणोदाः' (२०, २,४) साम्नी त्रिष्टुप्। यथा 'उदप्रुतो न रक्षमाणा' (२०,१६) इति बार्हस्पत्यम्, एवं यत्र मन्त्रान्तर्दैवता या दृश्यते स मन्त्रस्तद्दैवतको भवतीति सर्वत्र परिभाष्यते। 'वि हि सोतोरसृक्षत' इति त्रयोविंशतिमन्त्रान् (२०,१२६,१-२३) ऐन्द्रान् वृषाकपिः। 'इदं जना उप श्रुत' (२०,१२७) इत्यादि 'यदस्या अंहु°' (२०,१३६) इत्यन्तान् खिलमन्त्रान् सर्वानैतशो मुनिरपश्यदैतशो मुनिरपश्यदिति भा[१]. २-२. अपरस्याः संख्यार्षि° मूको. ४. =ऋ ३,४,१; १,८६,१; ८,४३,११.

---

† याज्ञियशं° मूको.

द्वे ( १-२ ) विराड्गायत्र्यौ । 'इन्द्रो ब्रह्मा' ( ३ ) आर्च्युष्णिक् । 'देवो द्रविणोदाः' ( ४ ) साम्नी त्रिष्टुप्[1] ।

'आ याहि' (२०,३)[2] तृचम् । इरिम्बिठिः । ऐन्द्रम् । गायत्रम् ।

'आ नो याहि' ( २०,४ )[3] ।

'अयमु त्वा' (२०,५)[4] अष्टौ[5] । अन्त्या (२०,६,१) विश्वामित्रस्य ।

'इन्द्र क्रतुविदम्' इति अष्टर्चस्य[6] (२०,६,२-९)[7] सूक्तस्य विश्वामित्रः ।

'उद्घ' ( २०,७ )[8] इति चतुर्ऋचं सूक्तम् । सुकक्षः[9] । अन्त्या ( ४ ) विश्वामित्रस्य ।

'एवा पाहि' (२०,८)[10] तृचं सूक्तम् । भरद्वाजकुत्सविश्वामित्राः[11] प्रत्यृचम् । त्रैष्टुभम् ।

'तं वो दस्म[12]' (२०,९)[13] इति चतुर्ऋचं सूक्तम् । नोधा आद्ययोः ( १-२ ) । मेध्यातिथिरन्त्ययोः ( ३-४ ) । आद्ये[14] ( १-२ ) त्रिष्टुभौ । प्रगाथे उत्तरे ( ३-४ ) ।

'उदु त्ये' (२०,१०)[15] इति द्व्यृचं सूक्तम् । मेध्यातिथिः । प्रगाथः ।

'इन्द्रः पूर्भित्' ( २०, ११ )[16] एकादशर्चं सूक्तम् । विश्वामित्रः । त्रैष्टुभम् ।

'उदु ब्रह्माणि' ( २०,१२ )[17] इति सप्तर्चं सूक्तम् । वसिष्ठः । अन्त्याम् ( ७ ) अत्रिः ।

'इन्द्रश्च' ( २०,१३ )[18] इति चतुर्ऋचं सूक्तम् । वामदेवगोत-

---

१. ऋचौ (३-४) ऋ. न स्तः । २ =ऋ ८,१७,१-३. ३. =ऋ ८, १७,४-६. ४. =ऋ ८,१७,७-१३; ३,४०,१. ५ वैतु. शौ. सप्त द्र. ६. वैतु. शौ. नव द्र. ७. =ऋ ३, ४०, २-९. ८. =ऋ ८, ९३, १-३; ३, ४०,२. ९. कक्षः भा[4]. १०. =ऋ ६,१७,३; १,१०४,९; ३,३२,१५. ११. भारद्वा° भा[1]. १२. नास्ति भा[1] [4] बी. १३. =ऋ ८,८८,१-२; ८, ३,९-१०. १४. आद्ये द्वे भा[1]. १५. =ऋ ८,३,१५-१६. १६. =ऋ ३, ३४,१-११. १७. =ऋ ७,२३,१-६; ५,४०,४. १८. =ऋ ४,५०,१०; १,८५,६; ९४,१; ३,६,९.

कुत्सविश्वामित्राः प्रत्यृचम्। इन्द्राबृहस्पती (१) । मरुतः । (२) आग्नेय्यौ (३,४)। जागतम्। अन्त्या (४) त्रिष्टुप् ॥१॥

'वयमु त्वाम्' (२०,१४)[1] इति चतुर्ऋचं सूक्तम्। सौभरिः। ऐन्द्रम्। प्रगाथः[2]।

'प्र मंहिष्ठाय' (२०,१५)[3] इति षडृचं[4] सूक्तम्। गोतमः। त्रैष्टुभम्।

'उदप्रुतो न' (२०,१६)[5] इति द्वादशर्चं सूक्तम्। अयास्यः। बार्हस्पत्यम्।

'अच्छा मे' (२०,१७)[6] इति द्वादशर्चं सूक्तम्। कृष्णः। जागतम्। अन्त्ये (११-१२) त्रिष्टुभौ ॥२॥

'वयमु त्वा' (२०,१८)[7] इति षट्। मेध्यातिथिप्रियमेधौ तिसृणाम् (१-३)। शिष्टाः (४-६) वसिष्ठः। गायत्रम्।

'वार्त्रहत्याय' (२०,१९)[8] इति सप्तर्चं सूक्तम्। विश्वामित्रः।

'शुष्मिन्तमं नः' (२०,२०)[9]। अन्त्याः (५-७) गृत्समदः।

'न्यू षु' (२०,२१)[10] एकादश। सव्यः[11]। जागतम्। अन्त्ये (१०-११) त्रिष्टुभौ ॥३॥

'अभि त्वा' (२०,२२)[12] षट्। त्रिशोकः। तिसृणामन्त्यानाम् (४-६) प्रियमेधः। गायत्रम्।

'आ तू नः' (२०,२३)[13] नव। विश्वामित्रः।

'उप नः' (२०,२४)[14]।

'अश्वावति' (२०,२५)[15] सप्त। गोतमः। अन्त्याम् (७) अष्टकः। जागतम्। अन्त्या (७) त्रिष्टुप् ॥४॥

---

१. =ऋ ८,२१,१-२;९-१०. २. प्रगाथम् भा[३ ४]. ३. =ऋ १,५७,१६. ४. षडर्चं मूको. ५. =ऋ १०,६८,१-१२. ६. =ऋ १०,४३,१-११;७,९७,१०. ७. =ऋ ८,२,१६-१८;७,३१,४-६. ८. =ऋ ७,३७,१-७. ९. =ऋ ३,३७,८-११;२,४१,१०-१२. १०. =ऋ १,५३,१-११. ११. सद्यः मूको. १२. =ऋ ८,४५,२२-२४; ५८,४-६. १३. =ऋ ३,४१,१-९. १४. २,४२,१-९. १५. =ऋ १,८३,१-६;१०,१०४,३.

'योगेयोगे' (२०,२६)[१] इति षट्। शुनःशेपस्तिसृणाम् (१-३) शिष्टाः (४-६) मधुच्छन्दाः। गायत्रम्।

'यदिन्द्र' (२०,२७)[२] षट्। गोषूक्त्यश्वसूक्तिनौ।

'व्यन्तरिक्षम्'[३] (२०,२८) चतुष्कम्।

'त्वं हि' (२०,२९)[४] पञ्च।

'प्र ते' (२०,३०)[५]। वरुः सर्वहरिर्वा। हरिस्तुतिः। जागतम्।

'ता वज्रिणम्' (२०,३१)[६]।

'आ रोदसी' (२०,३२)[७] चतुष्कम्[८] (?)। जागतम्[९]। अन्त्ये (२-३) त्रिष्टुभौ।

'अप्सु धूतस्य' (२०,३३)[१०] तृचम्। अष्टकः। त्रैष्टुभम् ॥५॥

'यो जातः' (२०,३४)[११] पञ्चदश[१२]। गृत्समदः। ऐन्द्रम्। त्रैष्टुभम्।

'अस्मा इदु' (२०,३५)[१३] षोडश। नोधाः।

'य एकः' (२०,३६)[१४] एकादश। भरद्वाजः।

'यस्तिग्मशृङ्गः' (२०,३७)[१५]। एकादश। वसिष्ठः।

'आ याहि सुषुमा' (२०,३८)[१६] षट्। उक्तम् (२०,३)। ऐन्द्रं तृचम्। मधुच्छन्दाः। गायत्रम्।

'इन्द्रं वः' (२०,३९)[१७] पञ्च। 'व्यन्तरिक्षम्' चतसृणाम् (२-५) उक्तम् (२०,२८)।

'इन्द्रेण' (२०,४०)[१८] तृचम्। 'आ दह' (३) मारुती।

'इन्द्रो दधीचः' (२०,४१)[१९] गोतमः।

---

१. =ऋ १,३०,७-९;१,६,१-३. २. =ऋ ८,१४,१-६. ३. =ऋ ८,१४,७-१०. ४. =ऋ ८,१४,११-१५. ५. =ऋ १०,९६,१-५. ६. =ऋ १०,९६,६-१०. ७. =ऋ १०,९६,११-१३. ८. वैतु. शौ. तृचं द्र.; नास्ति भा[४]. ९. नास्ति मूको. १०. =ऋ १०,१०४,२-४. ११. =ऋ २,१२,१-११; १२-१५ [=शौ. १३-१५;१८]. १२. वैतु. शौ. अष्टादश द्र. १३. =ऋ १,६१,१-१६. १४. =ऋ ६,२२,१-१६. १५. =ऋ ७,१९,१-११. १६. =ऋ ८,१७,१-३; १,७,१-३. १७. =ऋ १,७,१०;८,१४,७-१०. १८. =ऋ १,६,७-८;४. १९. =ऋ १,८४,१३-१५.

'वाचम्' (२०,४२)[१] कुरुस्तुतिः।

'भिन्धि' (२०,४३)[२]। त्रिशोकः[३]।

'प्र सम्राजम्' (२०,४४)[४]। इरिम्बिठिः।

'अयमु ते' (२०,४५)[५]। शुनःशेपो देवरातापरनामा[६]।

'प्रणेतारम्' (२०,४६)[७]। इरिम्बिठिः।

'तमिन्द्रम्' (२०,४७)[८] द्वाविंशतिः (?)[९]। सुकक्षस्तिसृणाम् (१-३)। इन्द्रादय उक्ताः (२०, ३८, १-६; २०,२६,४-६; १३,२,१६-२४) एकोनविंशतिः (?)।

'अभि त्वा' द्वाभ्यां सूक्ताभ्यां (२०,४८)[१०], (२०,४९)[११] खिलौ।

'कन्नव्यः' (२०,५०)[१२] द्वयृचम्। मेध्यातिथिः। प्रगाथः।

'अभि प्र वः' (२०,५१)[१३] प्रस्कण्वः। प्रगाथः। 'प्र सु' (५१,३-४) पुष्टिगुः। प्रगाथः।

'वयं घ त्वा' (२०,५२)[१४] तृचम्। मेध्यातिथिः। बार्हतम्।

'क ईं वेद' (२०,५३)[१५]।

'विश्वाः पृतनाः' (२०,५४)[१६]। रेभः। अतिजगती। उपरिष्टाद्-बृहती द्वे (२-३)।

'तमिन्द्रम्' (२०,५५)[१७]। रेभः। बृहती।

'इन्द्रो मदाय' (२०,५६)[१८] षट्। गोतमः। त्रैष्टुभम्।

'सुरूपकृत्नुम्' (२०,५७)[१९] दश (?)[२०]। मधुच्छन्दास्तिसृणाम्।

---

१. = ऋ ८,७६,१२;११;१०. २. = ऋ ८,४५,४०-४२. ३. त्रिशोक्यः मूको. ४. = ऋ ८,१६,१-३. ५. = ऋ १,३०,४-६. ६. देवतापर° मूको. ७. = ऋ ८,१६,१०-१२. ८. = ऋ ८,९३,७-९;१,७,१-३;८,१७,१-३; १,६,१-३;५०,१-९. ९. वैतु. शौ. एकविंशतिः द्र. १०. ३-४ = ऋ १०, १८९,१-३. ११ ४-७ = ऋ ८,८८,१-२;८,३,९-१०. १२. = ऋ ८,३, १३-१४. १३. = ऋ ८,४९,१-२;५०,१-२. १४. = ऋ ८,३३,१-३. १५. = ऋ ८,३३,७-९. १६. = ऋ ८,९७,१०-१२. १७. = ऋ ८,८६, १३;१-२. १८. = ऋ १,८१,१-३;७-९. १९. = ऋ १,४,१-३;३,३७, ८-११;२,४१,१०-१२;८,३३,७-९;१-३. २०. वैतु. शौ. षोडश द्र.

गायत्री। 'शुष्मिन्तमं नः' इत्याद्युक्ताः (२०,२०)। 'कं ईं वेद' इति उक्ताः[1] (२०,५३; २०,५२)॥६॥

'आयन्त इव' (२०,५८)[2] षट्(?)[3]। नृमेधः द्वयोः (१-२)। 'बण्महान्' द्वयोः (३-४) भरद्वाजः। आद्ययोः (१-२) इन्द्रः। तृतीयाचतुर्थ्योः सूर्यः। प्रगाथः।

'उदु त्य' (२०,५९)[4]। उक्तः (२०,१०,१-२)। 'उदित्' द्वयृचम् (३-४) वसिष्ठः। ऐन्द्रम्। प्रगाथः।

'एवा हि' (२०,६०)[5] षट्। तिसृणाम् (१-३) सुतकक्षः सुकक्षो वा। उत्तरासाम् (४-६) मधुच्छन्दाः। गायत्रम्।

'तं ते' (२०,६१)[6] दश(?)[7]। षण्णाम् (१-६) गोषूक्त्यश्वसूक्तिनौ। औष्णिहम्।

'वयमु त्वा' (२०, ६२)[8] इति उक्ताः (२० १४.१-४)। 'इन्द्राय' षट् (५-१०) नृमेधः। औष्णिहम्। 'तम्वभि' उक्ताः (२०,६१,४-६)।

'इमा नु कम्' (२०, ६३)[9] *नव। भुवनः साधनो वा सार्धं चतुर्थ्या। 'अया वाजम्' (३[३-४]) भरद्वाजः[10]। 'य एकं इत्' द्वितीयोऽर्धर्चः (?)[11] (४[३-४]) गोतमः। '[12]इमा नु कम्[12]' तिस्रः (१-३) त्रिष्टुभः। शिष्टाः (४-९) उष्णिहः।

'एन्द्र नः' (२०.६४)[13] षट्। नृमेधस्तिसृणाम् (१-३)। चतुर्थ्याद्यास्तिस्रः (४-६) गोषूक्त्यश्वसूक्तिनौ। औष्णिहम्। 'एदु' तृचम् (४-६) विश्वमनाः[14]।

'एतो नु' (२०,६५)[15]।

---

१. उक्तः मूको. २. =ऋ ८,९९,३-४; १०१, ११-१२. ३. वैतु. शौ. चतस्रः द्र. ४. =ऋ ८,३,१५-१६; ७,३२,१२-१३ ५. =ऋ ८,९२,२८-३०; १,८,८-१०. ६ =ऋ ८,१५,४-६; १-३. ७. वैतु. शौ. षट् द्र. ८. =ऋ ८,९८,१-३; १५,१-३; २१,१-२; ९-१०. ९. =ऋ १०,१५७,१-३; १,८४, ७-९; ८,१२,१-३. १०. -भारद्वाज बी. ११. इन्द्र चायोऽर्चं° भा°; अत्र पाठभ्रंशः प्रतीयते। १२-१२. य इन्द्र मूको. १३. =ऋ ८,९८,४-६; २४, १६-१८. १४. °मना औष्णिहम् मूको. १५. =ऋ ८,२४,१९-२१.

'स्तुहि' ( २०,६६ )[1] ॥७॥

'वनोति हि' (२०,६७)[2] दश (?)[3]। आद्यानां[4] परुच्छेपस्तिसृणाम् (१-३)। 'यज्ञैः' चतसृणाम् (४-७) गृत्समदः। आद्या (१) ऐन्द्री। द्वितीया (२) मारुती। तृतीया (३) आग्नेयी। चतस्रः (४-७) प्रकृतयः[5]। तिस्रः (१-३) अत्यष्टयः। चतस्रः (४-७) जगत्यः।

'सुरूपकृत्नुम्' (२०,६८)[6]। तिस्रः (१-३) उक्ताः (२०,५७,१-३) 'परेहि' नव (४-१२)। मधुच्छन्दाः। ऐन्द्रम्। गायत्रम्।

'स घा नः' (२०,६९)[7] द्वादश। 'युञ्जन्ति' तिस्रः (९-११), 'आदह' (१२) इत्येका च उक्ताः ( २०,४७,१०-१२;४०,३ )।

'वीळु चित्' (२०,७०)[8] विंशतिः। आद्ये द्वे (१-२) ऐन्द्रमारुत्यौ। तिस्रः (३-५) मारुत्यः। शिष्टाः (६-२०) ऐन्द्रमारुत्यः[9]।

'महाँ इन्द्र' (२०,७१)[10] षोडश। ऐन्द्रम् ॥८॥

'विश्वेषु' (२०,७२)[11] तृचम्। परुच्छेपः। आत्यष्टम्।

'तुभ्येदिमा' ( २०, ७३ )[12] षट्। वसिष्ठस्तिसृणाम् ( १-३ )। 'यदा वज्रम्' तिस्रः[13] ( ४-६ ) वसुक्रः। ऐन्द्रम्। आद्यास्तिस्रः ( १-३ ) विराजः। 'यदा वज्रम्' द्वे ( ४-५ ) जगत्यौ। 'यो वाचा' ( ६ ) अभिसारिणी।

'यच्चित्' (२०,७४)[14] अष्टौ[15]। शुनःशेपः। पाङ्क्तम्।

'वि त्वा' (२०,७५)[16]। उक्ता (२०,७२,२)। तृचम्। परुच्छेपः। आत्यष्टम्।

---

१. =ऋ ८,२४,२२-२४. २. =ऋ १,१३३,७;१३९,८;१२७,१; २,३६,२;४-५;३७,२. ३ वैतु. शौ. सस द्र. ४. आद्याः मूको. ५. कृतव्यः भा[5] बी. ६. =ऋ १,४,१-१०;५,१-२. ७. =ऋ १,५,३-१०;६,१-४. ८. =ऋ १,६,५-१०;७,१-१०;८,१-४. ९. ऐन्द्रमारुतः भा[5]. १०. =ऋ १,८,५-१०;९,१-१०. ११. =ऋ १,१३१,२-३;६. १२. =ऋ ७,२२,७-८; ३१,१०;१०,२३,३-५. १३. विदः मूको. १४. =ऋ १,२९,१-७. १५. वैतु. शौ. सस द्र. १६. =ऋ १,१३१,३-५.

'वने न' (२०,७६)[1] अष्टौ । वसुक्रः । ऐन्द्रम् । त्रैष्टुभम् ।

'आ सत्यः' ( २०,७७ )[2] अष्टौ । वामदेवः । त्रैष्टुभम् । ऐन्द्रम् ।

'तद् वः' (२०,७८)[3] तृचम् । शंयुः । गायत्रम् ।

'इन्द्र क्रतुम्' (२०,७९)[4] द्व्यृचम् । 'सौदासैरग्नौ[5] प्रक्षिप्यमाणः[6] शक्तिरन्त्यं प्रगाथम् आरेभे[7] । सोऽर्धर्चे उक्तोऽदह्यत । तं पुत्रोक्तं वसिष्ठः 'समापयतेति शाट्यायनकम्[8] वसिष्ठस्यैवार्षमिति ताण्डकम्'[9] ( ऋअ २,७,३२ ) ।

इतः प्रगाथ आगायत्रम् ।

'इन्द्र ज्येष्ठम्' (२०,८०)[10] द्व्यृचम् । शंयुः ।

'यद् द्यावः' ( २०,८१)[11] । पुरुहन्मा ।

'यदिन्द्र' ( २०,८२ )[12] । वसिष्ठः ।

'इन्द्र त्रिधातु' (२०,८३)[13] । शंयुः ।

'इन्द्रा याहि' ( २०,८४)[14] तृचम् । मधुच्छन्दाः । गायत्रम् ।

'मा चित्' (२०,८५)[15] चतुष्कम् । आद्ययोर्ऋचोः[16] प्रगाथार्षः । उत्तरयोर्मेध्यातिथिः । द्वौ प्रगाथौ ।

'ब्रह्मणा ते' ( २०,८६ )[17] एकर्चम् । विश्वामित्रः । त्रैष्टुभम् ।

'अध्वर्यवः' ( २०,८७ )[18] सप्त । वसिष्ठः । ऐन्द्रम् । अन्त्या (७) ऐन्द्राबार्हस्पत्या । त्रैष्टुभम् ।

'यस्तस्तम्भ' (२०,८८)[19] षड् । वामदेवः । बार्हस्पत्यम् ।

'अस्तेव' (२०,८९)[20] एकादश । कृष्णः । ऐन्द्रम् ।

---

१. = ऋ १०,२९,१-८. २. = ऋ ४,१६,१-८. ३. = ऋ ६,४५, २२-२४. ४. = ऋ ७,३२,२६-२७ ५. °सोरग्नौ मूको. ६. °माणम् मूको. ७. अपश्यत् मूको. ८-८. समाप्यति शाट्यायनवकम् मूको. ९. तु. जैमि २, ३९२; तां ४, ७, २-४ (तु. वें. ऋ ७, ३२, २६ ). १०. = ऋ ६, ४६, ५-६. ११. = ऋ ८,७०,५-६. १२. = ऋ ७,३२,१८-१९ १३. = ऋ ६,४६, ९-१०. १४. = ऋ १,३,४-६. १५. = ऋ ८,१,१-४. १६. °योर्द्वयृचः मूको. १७. = ऋ ३,३५,४. १८. = ऋ ७,९८,१-७. १९. = ऋ ४,५०, १-६. २०. = ऋ १०,४२,१-११.

'यो अद्रिभित्' (२०,९०)[1] तृचम् । बार्हस्पत्यम् । भरद्वाजः ॥९॥

'इमां धियम्' (२०,९१,१-१२;९२,१-३)[2] पञ्चदश[3] (?) । अयास्यः । बार्हस्पत्यम् । त्रैष्टुभम् । अन्त्यास्तिस्रः ( ९२,१-३ ) उक्ताः ( २०,२२,४-६ ) ।

'उदद्' ( २०,९२,४-२१ )[4] अष्टादश (?)[5] । प्रियमेधः । ऐन्द्रम् । 'अपादिन्द्रः' ( ८[१-२] ) अर्धर्चौ विश्वेदेवाः । 'वरणः' ( ८[३-४] ) इत्यर्धर्चौ वारुणः । 'यो राजा' इत्याद्यानाम् ( १६-२१ ) पुरुहन्मा । ऐन्द्रम् । प्रगाथौ । 'यद् द्याव' द्वे (२०-२१) उक्ते (२०,८१,१-२) ।

'उत् त्वा' (२०,९३)[6] अष्टौ । प्रगाथः । 'ईङ्खयन्तीः' पञ्च ( ४-८ ) देवजामय इन्द्रमातरः । ऐन्द्रम् । गायत्रम् ।

'आ यातु' ( २०,९४ )[7] एकादश । कृष्णः । ऐन्द्रम् । जागतम् । त्रित्रिष्टुबादि[8] द्वित्रिष्टुबन्तम् ( १,३,१०;११ ) ।

'त्रिकद्रुकेषु' (२०,९५)[9] षट् (?)[10] । तिसृणाम् (?) गृत्समदः । अन्त्यानां तिसृणाम् ( २-४ ) सुदाः पैजवनः"[11] । आद्या ( १ ) अष्टिः । द्वयोरतिशक्करी । चतुर्थ्याद्याः शक्वर्यः (?) ।

'तीव्रस्य' (२०,९६)[12] त्रयोविंशतिः(?)[13] । दश पूरणः । त्रैष्टुभम् । अन्त्याः पञ्च उक्ताः (२,३३,३-७) । 'ब्रह्मणा' षण्णां (११-१६) रक्षोहा । गर्भसंस्रावे प्रायश्चित्तम् । इतः (११-२४) आनुष्टुभम् । 'अक्षीभ्यां ते' इति षट् ( १७-२२ ) उक्ताः ( २,३३,१-६ ) । 'अपेहि' (२४) । प्रचेताः । दुःस्वप्नघ्नी ॥१०॥

---

१. =ऋ ६,७३,१-३. २. =ऋ १०,६७,१-१२. ३. वैतु. शौ. द्वादश द्र. ४. =ऋ ८,६९,४-१८;७०,१-६. ५. वैतु. शौ. एकविंशतिः द्र. ६. =ऋ ८,६४,१-३;१०,१५३,१-५. ७. =ऋ १०,४४,१-११. ८. त्रिष्टुबादि मूको. ९. =ऋ २,२२,१;१०,१३३,१-३. १०. वैतु. शौ. चतस्रः द्र. ११. नास्ति मूको. १२. =ऋ १०,१६०,१-५;१६१, १-५; १६२,१-६; १६३, १-२; ३-४ [ =शौ २०-२१ ]; १६४,१ [ =शौ २४ ]. १३. वैतु. चतुर्विंशतिः द्र. (तु. वैताश्रौ ३४,२० ).

'वयम्' (२०,९७)[1] तृचम् । कलिः । ऐन्द्रम् । प्रगाथः । बृहती ।

'त्वामिद्धि' ( २०,९८ )[2] द्व्यृचम् । शंयुः । ऐन्द्रम् । प्रगाथः ।

'अभि त्वा' (२०,९९)[3] मेध्यातिथिः । प्रगाथः ।

'अधा हि' ( २०,१०० )[4] तृचम् । नृमेधः । औष्णिहम् ।

'अग्निं दूतम्' (२०,१०१)[5] । मेध्यातिथिः । आग्नेयम् । गायत्रम् ।

'ईळेन्यः' ( २०,१०२ )[6] । विश्वामित्रः ।

'अग्निमीळिष्वावसे' (२०,१०३)[7] सुदीतिपुरुमीळ्हौ । अन्यतरो वा । आद्ययोर्द्वयोः ( १-२ ) भर्गः[8] । आद्ये ( १-२ ) बृहत्यौ । तृतीया ( ३ ) सतोबृहती ।

'इमा उ त्वा' ( २०,१०४ )[9] चतुष्कम् । द्वयोः ( १-२ ) मेध्यातिथिः । ऐन्द्रम् । प्रगाथः । अन्त्ययोः ( ३-४ ) नृमेधः । प्रगाथः ।

'त्वमिन्द्र' ( २०,१०५ )[10] पञ्च । नृमेधः । प्रगाथौ । अन्त्या ( ५ ) उक्ता ( २०,९२,१७ ) ।

'तव त्यत्' ( २०, १०६ )[11] तृचम् । गोषूक्त्यश्वसूक्तिनौ । औष्णिहम् ।

'समस्य' ( २०,१०७ )[12] पञ्चदश । वत्सस्तिसृणाम् ( १-३ ) । 'सूर्यो देवीम्' ( १५ ) कुत्सः । ऐन्द्रम् । अन्त्या ( १५ ) सौरी, जगती । 'तदिदास[13]' नव ( ४-१२ ), 'चित्रं देवानाम्' ( १३ ) उक्ताः[14] (५,२,१-९; १३,२,३४ ) ।

'त्वं न इन्द्र' (२०,१०८)[15] तृचम् । नृमेधः । ऐन्द्रम् । अन्त्या (३) पुरउष्णिक् । आद्या ( १ ) गायत्री । द्वितीया (२) ककुप् ।

---

१. =ऋ ८,६६,७-९. २. =ऋ ६,४६,१-२. ३. =ऋ ८,३,७-८. ४. =ऋ ८,९८,७-९. ५. =ऋ १,१२,१-३. ६. =ऋ ३,२७,१३-१५. ७. =ऋ ८,७१,१४;६०,१-२. ८. भगः मूको. ९. =ऋ ८,३,३-४;९०,१-२. १०. =ऋ ८,९९,५-७;७०,१-२. ११. =ऋ ८,१५,७-९. १२. =ऋ ८,६,४-६;१०,१२०,१-५;७;६;८;९ [पाभे. च यथायथं द्र.]; १,११५,१-२ [=शौ १४;१५]. १३. तदिदासीया मूको. १४. देवोक्ताः मूको. १५. =ऋ ८,९८,१०-१२.

'स्वादोरित्था' (२०,१०९)[१]। गोतमः। ऐन्द्रम्।

'इन्द्राय' (२०,११०)[२]। स्रुतकक्षः[३] सुकक्षो वा। गायत्रम्।

'यत् सोमम्' (२०,१११)[४] पर्वतः। औष्णिहम्।

'यदद्य' (२०,११२)[५]। सुकक्षः।

'उभयं शृणवत्' (२०,११३)[६] द्वयृचम्। भर्गः। आग्नेयम्। प्रगाथः।

'अभ्रातृव्यः' (२०,११४)[७]। सौभरिः। ऐन्द्रम्। गायत्रम्।

'अहमित्' (२०,११५)[८] तृचम्। वत्सः।

'मा भूम' (२०,११६)[९] द्वयृचम्। मेध्यातिथिः। ऐन्द्रम्। बार्हतम्।

'पिबा सोमम्' (२०,११७)[१०] तृचम्। वसिष्ठः। विराजः।

'शग्ध्यूषु' (२०,११८)[११] चतुष्कम्। भर्गः। अन्त्ययोः (३-४) मेध्यातिथिः। प्रगाथौ।

'अस्तावि' (२०, ११९)[१२] द्वयृचम्। आद्यायाः (१) आयुः। द्वितीयायाः (२) श्रुष्टिगुः[१३]। त्रैष्टुभम्।

'यदिन्द्र' (२०,१२०)[१४]। देवातिथिः। प्रगाथः।

'अभि त्वा' (२०,१२१)[१५]। प्रगाथः।

'रेवतीः' (२०,१२२)[१६] तृचम्। शुनःशेपः। गायत्रम्।

'तत् सूर्यस्य' (२०,१२३)[१७] द्वयृचम्। कुत्सः। सौर्य्यौ। त्रैष्टुभम्।

'कया नः' (२०,१२४)[१८] षडृचम्[१९]। वामदेवः। इन्द्रः। गायत्रम्। 'अभी षु' (३) पादनिचृत्।

---

१. =ऋ १,८४,१०-१२. २. =ऋ ८,९२,१९-२१. ३. स्त्रुतकक्षः भा[५]. ४. =ऋ ८,१२,१६-१८. ५ =ऋ ८,९३,४-६. ६. =ऋ ८, ६१,१-२. ७. =ऋ ८,२१,१३-१४. ८. =ऋ ८,६,१०-१२. ९. =ऋ ८,१,१३-१४. १०. =ऋ ७,२२,१-३. ११. =ऋ ८.६१,५-६; ३,५-६. १२. =ऋ ८,५२,९;५१,१०. १३. श्रुष्ट बी. १४ =ऋ ८,४,१-२. १५. =ऋ ७,३२,२२-२३. १६. =ऋ १,३०,१३-१५. १७. =ऋ १, ११५, ४-५. १८. =ऋ ४, ३१, १-३; १०, १५७,१; २; ३, ६+१७, १५. १९. तृचम् मूको.

'ऐन्द्र' (२०,१२५)[1] सप्त। सुकीर्तिः। चतुर्थीपञ्चम्यौ (४-५) आश्विन्यौ। त्रैष्टुभम्। चतुर्थी (४) अनुष्टुप्।

'वि हि' (२०,१२६)[2] त्रयोविंशतिः। वृषाकपिः, इन्द्राणी। इन्द्रस्य सस्नुदिरे(?)। पाङ्क्तम्।

'इदं जनाः'[3] (२०,१२७-१३६)। खिलाः।

'यद्ध प्राचीः' (२०,१३७)[4] चतुर्दश। आद्यायाः (१) शिरिम्बिठः। अलक्ष्मीनाशनम्। अनुष्टुप्। 'कपृन्नरः' (२) बुधः। वैश्वदेवी, ऋत्विक्स्तुतिर्वा। जगती। 'दधिक्राव्णः' (३) अनुष्टुप्। 'सुतासः' तिसृणाम् (४-६) ययातिः। सोमः पवमानः। अनुष्टुप्। 'अव द्रप्सः' पञ्चानाम् (७-११) [5]तिरश्चीराङ्गिरसो द्युतानो वा[5]। 'इष्यामि वः' (८[1]) पादो मारुतः। परा (९) ऐन्द्राबार्हस्पत्या। शिष्टाः (७-११) ऐन्द्र्यः। त्रिष्टुभः। 'तमिन्द्रः' तिस्रः (१२-१४) उक्ताः (२०,४७,१-३)।

'महाँ इन्द्रः' (२०,१३८)[6] तृचम्। वत्सः। ऐन्द्रम्। गायत्रम्।

'आ नूनम्' (२०,१३९)[7] पञ्च। शशकर्णः। आश्विनम्। आद्याचतुर्थ्यौ (१;४) बृहत्यौ। द्वितीयातृतीये (२-३) गायत्र्यौ। पञ्चमी (५) ककुप्।

"'यन्नासत्या' (२०,१४०)† । आद्या (१) बृहती। पञ्चमी (५) त्रिष्टुप्[8]। शिष्टाः (२-४) अनुष्टुभः।

'यातम्' (२०,१४१)[9]। आद्या (१) विराट्। द्वितीया (२) जगती। चतुर्थीपञ्चम्यौ[10] (४-५) बृहत्यौ। तृतीया (३) अनुष्टुप्।

'अभुत्स्यु' (२०,१४२)[11] षट्। आद्याश्चतस्रः (१-४) अनुष्टुभः। अन्त्ये (५-६) गायत्र्यौ।

---

१. = ऋ १०,१३१,१-७ [पाभे. च यथायथं द्र.]. २. = ऋ १०,८६,१-२३. ३. जनासः मूको. ४. = ऋ १०,१५५,४; १०१,१२; ४,३९,६; ९,१०१,४-६; ८,९६,१३-१७; ९३,७-९. ५-५. तिरश्चीद्युतीनाविध्या° मूको. ६. = ऋ ८,६,१-३. ७. = ऋ ८,९,१-५. ८-८. नास्ति मूको. † = ऋ ८,९,६-१०. ९. = ऋ ८,९,११-१५. १०. नास्ति मूको. ११. = ऋ ८,९,१६-२१.

